The Collection of Hindu Law Texts.

Vol. XV.

THE

# SANSKÂRA MAYÛKHA

*( Sanskrit Text. )*

A TREATISE ON

RITUALS

BY

S'REE S'ANKARABHAṬṬA

SON OF

BHAṬṬA NÎLAKAṆṬHA.

EDITED BY

J. R. GHARPURE, B. A , LL. B., (Honours-In-Law)

Pleader, High Court,

*Principal Law College, Poona*

First Edition.



1927.

धर्मशास्त्रग्रन्थमाला (ग्रन्थाङ्कः १५)

॥ श्रीः ॥

भट्टनीलकण्ठोद्धृतभगवन्तभास्करे
तत्तनयश्रीशंकरभट्टकृतः

# संस्कारमयूखः

## (प्रथमः)

स च

गन्नाथ रघुनाथ घारपुरे, बी. ए., एल्‌एल्. बी.
हायकोर्ट वकील, मुंबई,

पुण्यपत्तनस्थव्यवहाराश्रमे मुख्याध्यापकः

इत्यनेन संशोधितः प्रकाशितश्च ।

प्रथमावृत्तिः

शकाब्दाः १८४८, क्रिस्ताब्दाः १९२७.

# उपोद्घातः ।

धर्मशास्त्रग्रन्थमालाया अयं पंचदशमो ग्रन्थोऽधुना प्रकाशं नीयते । भट्टनीलकंठोद्भूत-भगवन्तभास्कराख्यधर्मशास्त्रप्रबन्धे द्वादश मयूखाः 'संस्काराचारकाला' इत्यादि श्लोके दर्शिताः। तेषामाद्योऽयं संस्कारमयूखो नीलकंठभट्टपुत्रः शंकरभट्टो रचितवान् । आचांगधेकादशमयूखास्तु भट्टनीलकंठेन स्वयमेव रचिता इत्यत्र विशेषः ।

भाट्टवंशविस्तारस्तथा भट्टनीलकण्ठस्य कालदेशादिविचारोऽस्मद्विरचितव्यवहारमयूखस्याङ्गल-भाषान्तरेऽस्या एवमालायाश्चतुर्दशमे विस्तरतः सावकाशश्च कृतः । सैव संक्षेपतो नीतिव्यव-हाराचारोत्सर्गप्रतिष्ठादिकेषुचिन्मयूखेषु दर्शितो भाट्टवंशवृक्षश्च दत्तस्तत्तत्स्थलेष्वालोचनीय इति नात्र उद्धापित इति शम् ।

अत्र यानि पुस्तकानि यैश्च सुमनस्कतया प्रेषितानि तेषां नामादीनि संज्ञाश्च प्रकाश्यन्ते । तद्यथा

अ—डेक्कनकॉलेजसंग्रहात्प्राप्तं १८८४–८७।२९९ इत्यनुक्रमांकेन चिह्नितम् ।

इ—आनन्दाश्रमसंग्रहादानीतम् । २७०८ „ „

ङ—सत्पुरवासिश्रीबालाचार्यगजेन्द्रगडकर इत्येतैः प्रेषितं ५६।२७ „

फ—फर्ग्युसनकॉलेजमंडलीकविभागात्प्राप्तम् ।

य—श्रीमत्सरदारविंचूरकर इत्येतेषां संग्रहात्प्राप्तम्

र—कलिकाता रॉयल एशिआटिकसोसाइटीतः प्राप्तम् II. A. 9. „

ह—श्री वाराणस्यां शिलामुद्रितं ।

ग—श्री गुजराथीमुद्रणालये मोहमय्यां मुद्रितं ।

एतदुपकृतं नो येभ्यः सकाशादेतानि प्राप्तानीति शम् ।

जगन्नाथ रघुनाथ घारपुरे.

# विषयानुक्रमणिका ।



श्री

भगवन्तभास्करे

# अथ संस्कारमयूखः प्रारभ्यते

श्रीगणेशायनमः ॥

यतः सर्वं विश्वं भजति जनि सत्ता लयमिदं य आत्मा सर्वेषां स्थिरचरजडानामपि विभुः ।
तमेतं भास्वंतं विधिहरिमहेशानवपुषं नमस्यामः कामं परमकमनीयं सुकृतिनां ॥ १ ॥
श्रीभास्करं शिवकरं शिरसा प्रणम्य श्रीनीलकंठपितरं जननीं च गंगां ।
तत्पादचिंतनबलो बुधशंकराख्यः संस्कारभास्करममुं वितनोति काश्याम् ॥ २ ॥ ५

१ उदरङ्गअपाठः; अ–ततः । २ ङ–सहसा ।

फ–यो लीलया संतनुतेऽत्र विश्वं तत्पालयत्यात्मनि विश्वरूपे । लयं नयत्याशु च पूर्णकामः शिवं तनोत्वाशु रविर्भमाद्यौ ॥
जज्ञे पितामहतनोः खलु कश्यपो यस्तस्मादजायत मुनिस्तु विभाण्डकाख्यः ।
तं पुत्रिणां धुरमरोपयदृष्यशृङ्गस्तस्यान्वयेऽप्यजनि शक्तिवराभिधानः ॥ २ ॥
तस्मिन्वंशे महति वितते सेंगराख्ये नृपाणां राजा कर्णः समजनि यथा सागरे शीतरश्मिः ।
कीर्त्या यस्य ग्रथिततरया श्रोत्रपात्रेऽभिपूर्णे कर्णस्यापि प्रविततकथा नावकाशं लभन्ते ॥ ३ ॥
विशोकाख्यदेवस्ततस्तत्सुतोऽभूद्विशोकीकृता येन सर्वा धरित्री ।
ततोऽप्यास राजाऽस्त्रशत्रुस्ततोऽभूद्दयाख्यो रणेनैव सर्वोद्धितज्ञः ॥ ४ ॥
अभूच्चाथ वैराटराजस्ततोऽभूद्भूपो मेदिनीवल्लभो मोडराजः । नरसिंहदेवस्ततो मन्युदेवस्ततोऽभूद्भूपश्चन्द्रपालाभिधानः ॥५॥
शिवगणाख्यनृपः समभून्ययो शिवगणाख्यपुरं प्रचकार यः ।
शिवगणेन समः सकलैर्गुणैः शिवशिवप्रथमो गणनासु यः ॥ ६ ॥
रोलिचन्द इति तत्तनयोऽभूत्कर्मसेननृपतिस्तदथानु । लोकपो नरहरिर्नृपराजो रामचन्द्र इति तत्तनुजातः ॥ ७ ॥
यशोदेवस्ततो जातस्ताराचन्द्रनृपस्ततः । चक्रसेनस्ततो राजा राजर्षिहनृपो यतः ॥ ८ ॥
ततोऽप्यभूद्भूपतिशाहिदेवः स्वकीर्तिभिर्निर्जितदुग्धसिन्धुः । अभूत्ततः श्रीभगवन्तदेवः सदैव भाग्योदयवान्क्षितीन्द्रः ॥९॥
यद्दानदविशाद्रिनिर्जितवपू रत्नाचलो लज्जया दूरे स्तब्ध इलावृते निविशते नो यत्र पुंसां गतिः ।
किंच यस्यदरातिवामनयनानेत्राम्बुभिर्वर्धितास्तेऽब्धयोऽमिर्वडवामुखोपहुतमुखाच्चः कथं नो भवेत् ॥ १० ॥
आदरतरेन राज्ञा विबुधकुलमणिर्दाक्षिणात्यावतंसो भट्टः श्रीनीलकण्ठः स्मृतिषु दृढमतिर्जैमिनीयेऽद्वितीयः ।
आज्ञामादाय मूर्ध्ना सविनयममुना तस्य सर्वान्निबन्धान्दृष्ट्वा सम्यग्विविच्य प्रवितताकेरणस्तन्यते भास्करोऽयम् ॥११॥
प्रतारकैरादृतमत्र किंचिन्मया तु निर्मूलतया तदुज्झितम् ।
छन्नोक्तिताऽसौ नहि तेन काचित्सपुष्पहीनाऽपचितिर्न दीयते ॥ १२ ॥
संस्काराचारकालाः समुचितरचनाः श्राद्धनीती विवादो दानोत्सर्गप्रतिष्ठा श्रमति जयकराः शंगतार्थप्रदाः ।
प्रायश्चित्तं विशुद्धिस्तदनु निगदिता शान्तिरेवं क्रमेण एवाता मन्त्रेऽत्र शुद्धे तु रचनमुख्यदा द्वादशैते मयूखाः ॥ १३ ॥
भगवन्तभास्कराख्ये ग्रन्थेऽस्मिन्शिष्टसंमते च ततः । संस्कारविधिमयूखः प्रतन्यते नीलकण्ठेन ॥ १४ ॥
सधूलनिर्धूलमपि व्यवस्थया विनाश्रुतं यद्विषयस्य केरपि । मानीवशैरत्नहृणिमापमाश्यैर्भिरग्वरानुतः मैः समं मतम् ॥१५॥

तत्रास्य धर्मप्रमाणविवेचकत्वात् प्रथमं धर्मप्रमाणान्युच्यते। तान्याह याज्ञवल्क्यः (आचारे ७)

"श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः। सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतमिति" ॥

*सदाचारः श्रुतिस्मृत्यविरुद्धोऽदृष्टार्थो यः संतोत्सवादि। धर्मे मूलं प्रमाणमित्यर्थः। सम्यक्संकल्पाज्जातः* कामो यथा भोजनव्यतिरेकेण जलं न पातव्यमिति। एतेषां च विरोधे पूर्वं पूर्वं बलीयः।

तथा च प्रयोगपारिजाते संग्रहे

"श्रुतिस्मृतिपुराणेषु विरुद्धेषु परस्परं। पूर्वं पूर्वं बलीयः स्यादिति न्यायविदो विदुः" ॥

स्मृतिष्वपि मनुस्मृतिः प्रबलेति। तथा चांगिराः "मन्वर्थविपरीता तु या स्मृतिः सा विनश्यति"। अनादरणीयेत्यर्थः। तथा "मनोर्ऋचः सामिधेन्यो भवंति" इत्यस्य वाक्यशेषे श्रूयते। "यद्वै किंच मनुरवदत्तद्भेषजमिति"। स्मृतिप्रवर्तका उक्ता याज्ञवल्क्येन (आचारे ४)

"मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोंगिराः। यमापस्तंबसंवर्त्ताः कात्यायनबृहस्पती ॥

"पराशरव्यासशंखलिखिता दक्षगौतमौ। शातातपो वसिष्ठश्च धर्मशास्त्रप्रवर्तकाः" ॥ इति।

अन्येऽप्युक्ताः पैठीनसिना

"तेषां मन्वंगिरोव्यासगौतमात्र्युशनोयमाः। वसिष्ठदक्षसंवर्त्तशातातपपराशराः ॥

"*विष्ण्वापस्तंबहारीताः शंखः कात्यायनो गुरुः। प्रचेता नारदो योगी बौधायनपितामहौ* ॥

"सुमंतुकाश्यपौ बभ्रुः पैठीनो व्याघ्र एव च। सत्यव्रतो भरद्वाजो गार्ग्यः कात्यायनस्तथा ॥

"जाबालिर्जमदग्निश्च लौगाक्षिर्ब्रह्मसंभवः। इति धर्मप्रणेतारः षट्त्रिंशदृषयः स्मृताः" ॥

षट्त्रिंशदिति न परिसंख्या। तेन विश्वामित्रादीनामपि धर्मप्रणेतृत्वं सिद्धं। एवमायुर्वेदादीनामपि स्मृतित्वं। तत्र केचन दृष्टमूलाः केचन श्रुतिमूला अर्थाः। एवं पुराणादीनामपि। अस्माभिस्तु प्रामाणिकानां वराहमिहिरादीनां वचांसि प्रमाणत्वेनोपन्यस्यंते[1]

संहिता उक्ता हेमाद्रौ भविष्यत्पुराणे

"भार्गवा नारदीया च बार्हस्पत्यांगिरस्यपि। स्वायंभुवस्य शास्त्रस्य चतस्रः संहिता मताः ॥"

यत्तु सूतसंहितायां

"आद्या सनत्कुमारोक्ता द्वितीया सूतसंहिता। तृतीया शांकरी विप्राश्चतुर्थी वैष्णवी मता ॥

"तत्परा संहिता ब्राह्मी सौर्यन्या संहिता तथेति" संहिता उक्तास्ताः स्कांदांतर्गता न स्वतंत्राः।

अन्येऽपि संहिताकर्त्तारः कश्यपेन गणिताः

"सूर्यः पितामहो व्यासो वसिष्ठोऽत्रिः पराशरः। कश्यपो नारदो गर्गो मरीचिर्मनुरंगिराः ॥

"रोमशः पौलिशश्चैव च्यवनो यवनो भृगुः। शौनकोऽष्टादशैवैते ज्योतिःशास्त्रप्रवर्त्तकाः" ॥ इति

संहितालक्षणं च

"आदौ शास्त्रोपनयनं खेटचारोऽब्दलक्षणं। तिथिवारसनक्षत्रयोगतिथ्यर्द्धलक्षणं ॥

"मुहूर्तोपग्रहः सूर्यसंक्रांतिर्गोचरक्रमः। चंद्रताराबलं चैव क्रिया षोडशकर्मणां ॥

"नृपाभिषेचनं देवप्रतिष्ठासद्मलक्षणं। अग्न्याधानं मेघगर्भनिखिलोत्पातलक्षणं ॥

"तच्छांतिर्मिश्रकाध्यायस्तृतीयस्कंधसंभवः" ॥ तृतीयः स्कंधः संहिता। संभवो रचना।

---

१ क–सौत्रनिबंधोपयोगि किंचिदुच्यते। तत्र प्रथमं धर्मप्रकरणान्युच्यंते ॥ २ ड–शसतो–। ३ डड–पीतव्य

-महापुराणान्युक्तानि वैष्णवे ( ३।६।२०-२१ )
-" ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा । तथान्यं नारदीयं च मार्कंडेयं च सप्तमं ॥
" आग्नेयमष्टमं चैव भविष्यं नवमं तथा । दशमं ब्रह्मवैवर्त्तं लैंगमेकादशं स्मृतं ॥
-" वाराहं द्वादशं चैव स्कांदं चात्र त्रयोदशं । चतुर्दशं वामनं च कौर्मं पंचदशं स्मृतं ॥
-" मात्स्यं च गारुडं चैव ब्रह्मांडं च ततः परं । अष्टादश पुराणानि कीर्त्तितानि मया तवेति" ॥
उपपुराणानि कौर्मे ( पू. १।१६-२१ )
" अन्यान्यपि पुराणानि मुनिभिः कथितानि तु । आद्यं सनत्कुमारोक्तं नरसिंहमतःपरं ॥
" तृतीयं नांदमुद्दिष्टं कुमारेण तु भाषितं[1] । दुर्वाससोक्तमाश्चर्यं नारदोक्तमतःपरं ॥
" कापिलं मानवं चैव तथैवोशनसेरितं । ब्रह्मांडं वारुणं चैव कालिकाव्हयमेव च ॥
-" माहेश्वरं तथा सांबं सौरं सर्वार्थसंचयम् । पराशरोक्तं प्रथमं तथा[2] भागवताव्हयम् ॥
-" इदमष्टादशं प्रोक्तं पुराणं कौर्ममुत्तमम् "। महापुराणमध्ये गणितानामपि उपपुराणेषु गणनाया-न कोऽपि विरोधः । एकस्यैवोभयसंज्ञाकरणे विरोधाभावात् । इत्युपपुराणानि ॥
-धर्मलक्षणं जैमिनिराह ( १।१।२ ) "चोदनालक्षणोऽर्थो धर्मः" । विधिश्चोदनाशब्देनोच्यते । -तत्प्रमाणक इत्यर्थः । धर्माधर्मयोरुपादानपरित्यागावुक्तौ स्कांदे
-" धर्माद्राज्यं धनं सौख्यमधर्माद्दुःखसंभवः । तस्माद्धर्मं सुखार्थाय कुर्यात्पापं विसर्जयेत् " ॥
-" धर्मेण पापमपनुदतीति " च श्रुतिः ( तैत्तिरीयारण्यके नारायणीये ) ।
धर्मश्च द्विविधः । श्रौतः स्मार्त्तश्च । श्रौतोऽग्निहोत्रज्योतिष्टोमादिः । स्मार्त्तोऽष्टकादिः । अस्मिंश्च ग्रंथे स्मार्त्तधर्मः क्रियते ।

## अथ देशाः ।

विष्णुपुराणे ( २।३ )
" उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणं । वर्षं तद्भारतं नाम भारती[3] यत्र संततिः ॥१॥
" अत्र जन्मसहस्राणां सहस्रैरपि सत्तम । कदाचिल्लभते जंतुर्मानुष्यं पुण्यसंचयात् " ॥ २३ ॥
मनुः(२।२२) "आ समुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात् । तयोरेवांतरं गिर्योरार्यावर्त्तं विदुर्बुधाः"॥
तयोर्हिमवद्विंध्ययोः । विष्णुर्विशेषमाह ( ८४।४ )
" चातुर्वर्ण्यव्यवस्थानं यस्मिन्देशे न विद्यते । तं म्लेच्छदेशं जानीयादार्यावर्त्तमतःपरं " ॥
मनुः ( २।२३ )
" कृष्णसारस्तु चरति मृगो यत्र स्वभावतः । स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततःपरः ॥ "
" सरस्वतीदृषद्वत्योर्देवनद्योर्यदंतरं । तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते " ॥ (२।१७) तथा
" हिमवद्विंध्ययोर्मध्ये यः प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः" ॥(२।२१)
विनशनं सरस्वत्याः । तथा ( २।९ )
" कुरुक्षेत्रं च मत्स्याश्च पंचालाः[4] शूरसेनिकाः । एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनंतरः ॥
" एतान्द्विजातयो देशान् संश्रयेयुः प्रयत्नतः । शूद्रस्तु यस्मिन्कस्मिन्वा निवसेद्वृत्तिकर्षितः ॥
" एष धर्मस्य वो योनिः समासात्कथितः किल । सर्वपापहरः पुण्यसाधनं सर्वकर्मणां " ॥
अनंतर ईषन्न्यूनः । मत्स्या विराटदेशाः । पंचालाः कान्यकुब्जदेशाः । शूरसैनिका मथुरादेशाः ॥

---

१ उशनि मुद्रितकूर्मपुराणपाठः । २ + चतुर्थं शिवधर्माख्यं साक्षान्नंदीशभाषितम् । इति मुद्रितपाठः । तथैव भार्गवाह्वयम् मु. पाठः ४ इदं तु पंचदशकं मुद्रितपाठः ५ फ-भारती; इद-भारतास्यसंततिः ६ स्वतः ६ इत ७ ईडफ-पांचालाः

व्यासः

" सर्वे शिलोच्चयाः पुण्याः सागराः सरितस्तथा। अरण्यानि च पुण्यानि विशेषान्नैमिषं तथा"॥
तथा "आर्यावर्त्तसमुत्पन्नो द्विजो वा यदि वाऽद्विजः। कर्मदां सिंधुपारं च करतोयान्न लंघयेत्॥
" आर्यावर्त्तमतिक्रम्य विना तीर्थक्रियां द्विजः। आज्ञां चैव तथा पित्रोर्दैवे न विशुद्ध्यतीति"॥
इति निबंधोपयोगिविचारः।

अथ संस्कारोपयोगिविनायकपूजनस्वस्तिवाचनाद्युच्यते। गृह्यपरिशिष्टे
"आदौ विनायकः पूज्य अंते तु कुलदेवताः"। तथा "अथ स्वस्तिवाचनमृद्धिपूर्तेषु ऋद्धिर्विवाहांता अपत्यसंस्काराः प्रतिष्ठोद्यापने पूर्ते कर्मणश्चाद्यंतयोः कुर्यादिति"।
शौनकः

" पुण्याहवाचनविधिं वक्ष्यामोऽथ यथाविधि। प्रयोक्तुः कर्मणा चादावंते चोर्द्ध्वसिद्धय"॥इति।
व्यासः

" संपूज्य गंधमाल्याद्यैर्ब्राह्मणान्स्वस्ति वाचयेत्। धर्मकर्मणि मांगल्ये संग्रामेऽद्भुतदर्शने"॥
तच्च प्रधानप्रयोगांतर्गतमिति केचित्। प्रयोगबहिर्भूतमिति तु बहवः।
तत्राद्ये प्रधानसंकल्पं कृत्वा तत्कार्यं। द्वितीये तु तत्कृत्वा प्रधानसंकल्प इति प्रयोगरत्ने
भट्टचरणाः। कर्मप्रदीपे

" कर्मादिषु च सर्वत्र मातरः सगणाधिपाः। पूजनीयाः प्रयत्नेन पूजिताः पूजयंति ताः॥
" प्रतिमासु च शुद्धासु लिखित्वा वा पटादिषु। अपि वाऽक्षतपुंजेषु नैवेद्यैश्च पृथग्विधैः॥
" कुड्यलग्ना वसोर्धाराः सप्तवारं घृतेन तु। कारयेत्पंचधारा वा नातिनीचा न चोच्छ्रिता॥
"आयुष्याणि च शांत्यर्थं जप्त्वा तत्र समाहितः। षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेदिति"॥
मातरो गौर्यादयः षोडश। वसोर्द्धारा। देवता ब्राह्मी माहेश्वरीत्याद्याः सप्त स्मृत्यंतरप्रसिद्धा ज्ञेयाः। षड्भ्य इति कातीयछंदोगपरं। अन्येषां तु नवदैवत्यं।

" महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च। नवदैवतमत्रेष्टं शेषं पाट्पौरुषं विदुरिति"॥
हेमाद्रौ वचनादिति तातचरणाः। मम तु प्रतिभाति
" महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च। ज्ञेयं द्वादशदैवत्यं तीर्थे प्रोष्ठपदासु चेति"॥
द्वादशदैवत्यविधानात्पक्षत्रयमपि यथासंप्रदायं व्यवतिष्ठत इति।
नांदीश्राद्धनिमित्तान्याह लौगाक्षिः

" नामान्नचौलगोदानसीमोपनयपुंसवे। स्नानाधानविवाहेषु नांदीश्राद्धं विधीयते"॥
वृद्धगार्ग्यः "अग्न्याधानाभिषेकादिविष्टापूर्ते स्त्रिया ऋतौ। वृद्धिश्राद्धं प्रकुर्वीत आश्रमग्रहणे तथेति"। विष्णुपुराणेऽपि (३।१३।५–६)
" कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः। नामकर्मणि बालानां चूडाकर्मादिके तथा॥
" सीमंतोन्नयने चैव पुत्रादिमुखदर्शने। नांदीमुखं पितृगणमर्चयेत्प्रयतो गृही॥"
तथा (३।१०।४)
" जातस्य जातकर्मादिक्रियाकांडमशेषतः। पुत्रस्य कुर्वीत पिता श्राद्धं चाभ्युदयात्मकं"॥
जातकर्मादिक्रियाकांडमपत्यसंस्काराः। पुत्रस्येति पुंस्त्वमविवक्षितमनुवाद्यविशेषणत्वात्।

१ र–कर्मदां। २ ह्र–द्वाववष्टकासु च, अ–मन्वष्ट।

तेन कन्याया अपि संस्कारांगमाभ्युदयिकं समंत्रकमेव भवति । मंत्रबाधे मानाभावात् ।

यत्तु पुंजातकर्मादिसंस्कारान् उक्त्वा याज्ञवल्क्यवचः ( आ० १३ ) "तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रक" इति तत्प्रधानांगमंत्रबाधपरं । यदि हि "अवभृथेन चरंतीति" श्रुतीयांतेनैव सांगभावनामुक्त्वा तस्यां तूष्णीत्वं विधीयेत तदा स्यादंगभूतमंत्रबाधः । इह तु "यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्या" इत्यत्रेष्टीनामिव क्रियाणां प्रथमांतपदोपात्तत्त्वात् प्रधान एव तूष्णीत्वविधिर्नांगेऽपीति वृद्धिश्राद्धं समंत्रकमेव भवतीति श्राद्धमयूखे तातचरणाः ।

यत्तु "नानिष्ट्वा तु पितॄन् श्राद्धे कर्म वैदिकमारभेत्" तदत्र प्रातिस्विकवाक्ये नांदीश्राद्धमुक्तं तत्रैवोपसंह्रियते । यद्वा वाक्यांतरप्राप्तकर्मांगत्वे एतत्पूर्वकालतामात्रमेव बोधयति न कर्मांगतामपि । अतो न संध्यावंदनादावतिप्रसंगः । पक्षद्वयेऽपि "नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते । न सोष्यंती जातकर्मप्रोषितागतकर्मस्विति" कर्मप्रदीपवचोऽनुवादकमेव न निषेधकं प्राप्त्यभावात् । सोष्यंती कर्मसुखप्रसवार्थं । प्रोषितागते च पुत्रे पितुः कर्म छंदोगपरिशिष्टे प्रसिद्धमत एव "नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयात्मकं । पुत्रजन्मनि तत्कार्यं जातकर्मसमं नरैरिति" मार्कंडेयपुराणवचने नैमित्तिकजातकर्मसमपदाभ्यां पुत्रजन्मनिमित्तकमेव श्राद्धं न तु कर्मांगमित्युक्तं संगच्छते ।

यत्तु हेमाद्रौ "वृद्धिश्राद्धं तु कर्तव्यं जातकर्मादिकेषु वै" इति तत्रापि जातकर्मादौ येषामित्यतद्गुणसंविज्ञानबहुव्रीहिणा नामकर्मादीनामेव ग्रहणं न जातकर्मण इति । एवं च जातकर्मातिरिक्तसंस्कारेषु नांदीश्राद्धस्यांगत्वे सिद्धे यदैकसंस्कार्यस्यानेकसंस्कारेष्वेककर्तृकेषु एकस्मिन्काले युगपदुपस्थितेषु देशकालकर्त्रैक्याद् गृह्यमाणरूपतंत्रन्यायादेव मातृपूजनाभ्युदयिकयोः सकृदनुष्ठानप्राप्तेः "गणशः क्रियमाणेषु मातृभ्यः पूजनं सकृत् । सकृदेव भवेच्छ्राद्धमादौ न पृथगादिष्विति ॥" ग्राह्यवचनमनुवादकमेव न सकृत्त्वविधिपरं । अन्ये तु । अनेनैव न्यायेनानेकसंस्कार्याणां सजातीयविजातीयानेकसंस्कारेष्वपि सकृदेव तत् इत्याहुः । तन्न । संस्कारजन्यचरमापूर्वाणामनेकसंस्कार्यनिष्ठत्वेन तदंगाभ्युदयिकश्राद्धजन्यांगापूर्वाणामपि तन्निष्ठत्वस्यावश्यकत्वात् । न च तत्संभवति । एकया सामग्र्या एकमेव कार्यं जन्यत इति नियमस्य योगसिद्ध्यधिकरणे स्थापितत्वान्न सकृदनुष्ठितेनाभ्युदयिकेनानेकापूर्वोत्पत्तिरिति अनेकसंस्कार्येषु पृथगेव वृद्धिश्राद्धमिति तातचरणाः ।

ननु सत्रादिष्वनेकयजमानगतान्यपूर्वाण्येकस्मात्सत्रप्रयोगादुत्पद्यंत इति उक्तनियमे व्यभिचारात्प्रकृतेपि तथास्त्विति चेन्न । तत्रापि स्वस्वात्मघटितसामग्रीभेदात् ।

प्रधानावृत्त्या प्राप्ताया नांदीश्राद्धावृत्तेरपवादः कर्मप्रदीपे "असकृद्यानि कर्माणि क्रियेरन्कर्मकारिणा । प्रतिप्रयोगं नैता स्युर्मातरः श्राद्धमेव चेति" ॥ तान्येव कर्माण्याहुः "आधानहोमयोश्चैव वैश्वदेवे तथैव च । बलिकर्मणि दर्शे च पौर्णमास्ये तथैव च ॥

१ डइ–तेन । २ डइ–विधीयते । ३ ङ्ग–तूष्णीत्वं; अड–तूष्णीत्वविधि; ई–तूष्णीत्वा ४ डइअ–सोष्यंती

" नवयज्ञे च यज्ञज्ञा वदंत्येवं मनीषिणः। एकमेव मनेच्छ्राद्धमेतेषु न पृथक् पृथक् ॥"

असकृत्पुःपुनः। प्रतिदिनं प्रतिमासं प्रत्यब्दं चेति यावत्। नवयज्ञो नवान्नेष्टिः। पूर्वश्लोकस्थ–कर्मशब्दस्य उत्तरश्लोकपरिगणितेषु कर्मसु उपसंहारस्तेनापरिगणितज्योतिष्टोमादिषु मवत्येव प्रतिप्रयोगं वृद्धिश्राद्धमिति सातचरणाः। होमादिनवयज्ञपर्यंतेषु न पृथक्श्राद्धं किं त्वाधानादौ कृतमेव श्राद्धमुपकरोतीति केचित्[1] आभ्युदयिके कालमाह वसिष्ठः

" पूर्वेद्युर्मातृकं श्राद्धं कर्माहे पैतृकं तथा। उत्तरेद्युः प्रकुर्वीत मातामहगणस्य तु ॥

" अलाभे भिन्नकालानां नांदीश्राद्धत्रयं बुधः। पूर्वेद्युर्वै प्रकुर्वीत पूर्वाण्हे मातृपूर्वकमिति " ॥

मातृपूर्वकमेव श्राद्धत्रयं विधृतमाश्वलायनेन

" माता पितामही चैव संपूज्या प्रपितामही। पित्रादयस्त्रयश्चैव मातुः पित्रादयस्त्रयः ॥

" एते नवार्चनीयाः स्युः पितरोऽभ्युदये द्विजैरिति "। यत्तु वृद्धवसिष्ठवचनं

" नांदीमुखे विवाहे च प्रपितामहपूर्वकं। नामसंकीर्तयेद्विद्वानन्यत्र पितृपूर्वकमिति " ॥

स्मृत्यर्थसारे च " वृद्धमुख्यास्तु पितरो वृद्धिश्राद्धेषु भुंजते " इति तदाश्वलायनान्यपरं। आश्वलायनानां त्वाश्वलायनवचनादानुलोम्येन तन्मात्रादिपूर्वकमिति भट्टचरणप्रभृतयो बहवः। मात्रादीन्विशिनष्टि विष्णुः " नांदीमुखान्पितॄनादौ तर्पयेत्पितृदेवता " इति ॥

अत्र पितृशब्दो न जनकपरः किंतु सपिंडीकरणजन्यपितृभावपरः पितॄनिति बहुवचनात्। यत्तु ब्राह्मे " पिता पितामहश्चैव तथैव प्रपितामहः। त्रयो ह्यश्रुमुखा एते पितरः संप्रकीर्तिताः ॥ " तेभ्यः पूर्वे त्रयो ये तु ते तु नांदीमुखाः स्मृता " इति तन्महालयप्रकरणपठितत्वादिति हेमाद्र्यादयः। विभक्त्यादिविषये विशेषः प्रयोगरत्नसंग्रहे

" शुभाय प्रथमातेन वृद्धौ संकल्पमाचरेत्। न षष्ठ्या यदि वा कुर्यान्महादोषोऽभिजायते ॥

" अनस्मद्वृद्धशब्दानामरूपाणामगोत्रिणां। अनाम्नावातिलाद्यैश्च नांदीश्राद्धं च सव्यवत् " ॥

कारिकायां च " संबंधनामरूपाणि वर्जयेदत्र कर्माणि "।

पिंडदानव्यवस्थोक्ता भविष्यत्पुराणे

" पिंडनिर्वपणं कुर्यान्न वा कुर्यान्नराधिप। वृद्धिश्राद्धे महाबाहो कुलधर्मानवेक्ष्य त्विति " ॥

पिंडदानपक्षे विशेषमाह वृद्धवसिष्ठ " दधिकर्कंधुसंमिश्रान्पिंडान्दद्याद्यथाक्रमं "। कर्कंधुर्बदरीफलं। एकैकस्मै पिंडद्वयं वा देयं। " एकं नाम्नाऽपरं तूष्णीं तथा पिंडद्वयं बुध " इति चतुर्विंशतिमतात्। अत्र कर्तृव्यवस्थोक्ता कात्यायनेन

" स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु। पिंडानोद्वाहनाच्चेषां तस्याभावे तु तत्क्रमात् " ॥

तेषां सुतानामोद्वाहनात्प्रथमविवाहपर्यंतं पिता स्वपितृभ्यः पिंडदानोपलक्षितं वृद्धिश्राद्धं कुर्यात्। तस्य पितुरभावे तस्य संस्कार्यस्य पितॄणां यः क्रमस्तेन क्रमेण पितृव्यमातुलादिर्दद्यात्न[2] स्वपितृभ्य इति हेमाद्रिः। अत्र पितुरभावो ध्वंस एव। न त्वत्यंताभावः। तथात्वे प्रतिनिधित्वादेव तदीयेभ्य एव पित्रादिभ्यो दद्यादित्येवेतिवचनवैयर्थ्यं स्यात्। तं पितरमारभ्य स्वस्य

१ ङ–कर्माभ्युदयिके। २ ङ–त।

पितॄणां यः क्रमस्तेन क्रमेण दद्यात् । तथा च तेषामिति तच्छब्देन स्वपितरः परामृश्यंत इति व्याख्यानमयुक्तं । तस्याभावे तेषां दद्यादित्यनेनैव सोकांक्ष्यात्तत्क्रमादित्यस्य वैयर्थ्यापत्तेः । ओद्वाहनादित्यत्र विशेषः सायणीये

" नांदीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे पुनः । अत ऊर्ध्वं सुतः कुर्यात्स्वयमेव तु नांदिकमिति "॥

अत्र ' लक्षण्यां स्त्रियमुद्वहेत् ' ' अरोगामुपयच्छेत ' त्यादौ सांगोद्वाहभावनाया वरस्य कर्तृत्वे च नांदीश्राद्धेऽपि तत्कर्तृत्वं प्राप्तमपि पिंडानोद्वाहनादित्यनेनापोदितमत ऊर्ध्वमित्यनेन . प्रसूय इति विधिलाघवायात ऊर्ध्वमित्येव विधीयते न तु पिता कुर्यादित्यपि । तेन प्रथमोद्वाहे पितुरभावे वरः स्वयमेव कुर्यादित्युक्तं ।

जीवत्पिता कथं कुर्यादित्यपेक्षायामाह कात्यायनः

"वृद्धौ तीर्थे च सन्यस्ते ताते च पतिते सति । येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुत" इति॥ ताते सतीति वृद्धितीर्थसन्यस्तपतितपदैः प्रत्येकं संबध्यते । तत्रापि वृद्धौ तीर्थे चेत्यनेकनिमित्तसमावेशे वाच्यभेदापत्तेरर्द्धमंतर्वेदि मिनोत्यर्द्धं बहिर्वेदीत्यंतर्वेदिपदे इव संधिदेशस्य जातपुत्रः " कृष्णकेशोऽग्निमादधीते "ति जातपुत्रादिपदानीव वयोविशेषस्य वृद्धितीर्थपदे जीवत्पितृकाधिकारिकश्राद्धमात्रोपलक्षके इति श्राद्धमयूखे तातचरणाः । येभ्य एवेत्येवकारेण मृतमातृमातामहस्यापि तत्पार्वणेन भवत इति बोध्यं ।

पितामहप्रपितामहयोर्जीवतोर्विशेष उक्तो विष्णुपुराणे

" पितरि जीवति यः श्राद्धं कुर्यात्स एषां पिता कुर्यात्तेषां कुर्यात्पितरि पितामहे च येषां पितामहः । पितरि पितामहे प्रपितामहे च नैव दद्यादिति " ।

आश्वलायनानां विशेषस्तु गृह्यपरिशिष्टे " जीवत्पिता सुतसंस्कारेषु मातृमातामहयोस्तस्यां जीवत्या मातामहस्य कुर्यादिति "॥

अत्रानयोरन्यतरजीवने तु सवर्गं इज्यः । उभयोर्जीवने तु वर्गत्रयमपि पितृनिरूपित एव । केचित्तु एतद्वचसाऽपि स्वीयमातृमातामहपार्वण एव भवतो न पितृपार्वणमित्याहुरिति दिक् ।

॥ अथ संस्काराः ॥

तानुद्दिशति गौतमः ( धर्म सू० ८।८ )

" गर्भाधानं पुंसवनसीमंतोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनानि चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणीसंयोगः । पंचानां यज्ञानामनुष्ठानमष्टकापार्वणश्राद्धं श्रावण्याग्रहायणी चैत्री आश्वयुजीति सप्त पाकयज्ञसंस्था अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि आग्रयणेष्टि निरूढपशुबंधः सौत्रामणीति सप्त हविर्यज्ञसंस्था अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोप्तोर्याम इति सप्त सोमसंस्था इत्येते चत्वारिंशत्संस्कारा " इति । " यस्यैते चत्वारिंशत्संस्कारा अष्टावात्मगुणाश्च स ब्रह्मणः सायुज्यमाप्नोतीति " ।

पार्वणः स्थालीपाकः । श्रावणी तत्र क्रियमाणं श्रवणाकर्म । आग्रहायणी तत्र क्रियमाणं प्रत्यवरोहणं चैत्री तत्र क्रियमाणः शूलगवः । आश्वयुजीकर्म तत्र क्रियमाणं आश्वयुजीकर्म । अष्टावात्मगुणाः दया सर्वभूतेषु क्षांतिरनसूया शौचमनायासो मंगल्यमकार्पण्यमस्पृहेति ।

---

१ ठ्ई—नाद्यश्रामिति ।

हारीतः " द्विविध एव संस्कारो भवति । ब्राह्मो दैवश्च । गर्भाधानादिस्मार्तो ब्राह्मः । पाकयज्ञा हविर्यज्ञाश्चेति दैवः । ब्राह्मेण संस्कारेण संस्कृत ऋषीणा सलोकतां गच्छति । दैवेनोत्तरेण संस्कृतो देवानां समानतां सलोकतां गच्छतीति " ।

अंगिरास्तु पंचविंशतिसंस्कारानाह

" गर्भाधानं पुंसवनं सीमंतो बलिरेव च । जातकृत्यं नामकर्म निष्क्रमोऽन्नाशनं परं ॥
" चौलकर्मोपनयनं तद्व्रतानां चतुष्टयं । स्नानोद्वाहौ चाग्रहणमष्टकाश्च यथायथं ॥
" श्रावण्यामाश्वयुज्यां च मार्गशीर्ष्यां च पार्वणं । उत्सर्गश्चाप्युपाकर्म महायज्ञाश्च नित्यशः ।
" संस्कारा नियता ह्येते ब्राह्मणस्य विशेषतः ॥
" पंचविंशतिसंस्कारैः संस्कृता ये द्विजातयः । ते पवित्राश्च योग्याश्च श्राद्धादिषु सुयंत्रिता"॥ इति ।

बलिर्विष्णुबलिः । आश्वलायनस्तु संज्ञाविशेषमप्याह

" नैमित्तिकाः षोडशोक्ताः समुद्वाहवसानकाः । सप्तैवाग्रयणाद्याश्च संस्कारा वार्षिका मताः ॥
" मासिकं पार्वणप्रोक्तमशक्तानां तु वार्षिकं । महायज्ञाश्च नित्याः स्युः संध्यावच्चाग्निहोत्रवदिति "॥

पार्वणश्राद्धं मासिकं मासि मासि कर्त्तव्यं । अशक्तानां तु वार्षिकं वर्षे एकवारं कर्त्तव्यमिति ॥ संस्कारानुक्त्वा यमः "शूद्रोऽप्येवंविधः कार्यो विना मंत्रेण संस्कृत" इति । होमोऽपि द्विजानामेव ॥ " गार्भैर्होमैर्जातकर्मचूडामौंजीनिबंधनैः । बैजिकं गार्भिकं चैनो द्विजानामपमृज्यत " ॥ इति मनुवाक्ये ( २।२७ ) द्विजग्रहणादिति धर्मप्रकाशे ।

बीजं शुक्रशोणिते तत्संबंधि निषिद्धकालमैथुनादिप्रयुक्तं बैजिकं । अशुचिगर्भकोशस्थितिजं गार्भिकं तदपगच्छतीति कुल्लूकभट्टः । बीजगर्भयोः पापनिमित्तत्वाभावादुभयसंसर्गादशुचित्वमात्रमेनःशब्दार्थो न पापमिति तु मेधातिथिः । विज्ञानेश्वरस्तु " एवमेनःशमं याति बीजगर्भसमुद्भवमि ' त्यतद्व्याख्याने गोत्रव्याधिसंक्रांतिनिमित्तमेनो न तु पतितोत्पन्नत्वादित्याह ( पृ. ५ पं. २ ) पापनिरासार्थत्वाच्च नित्यताऽपि । यज्ञवल्क्यः ( आ. १० )

"ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः।निषेकाद्याः श्मशानांतास्तेषां वै मंत्रतःक्रिया"॥इति

तेषां मंत्रतः क्रिया इत्युक्तेः शूद्रस्यामंत्रका इति गम्यते । तत्र तस्याध्ययनाभावात्तदंगभूतोपनयन वेदव्रतादीनां निवृत्तिः ।

जातकर्माद्याः स्त्रीणामप्यमंत्रकाः "तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समंत्रक इति" स्मृतेः ॥ अत्र चोपनयनांतानामावश्यकत्वं न स्नानादीनां । तेन " यमिच्छेत्तु तमावसेद्ब्रह्मचर्यादेव प्रव्रजेदित्यादि " संगच्छते ।

आश्वलायनेन तु उपनिषदि गर्भलंभनं पुंसवनमनवलोभनमप्युक्तं । अन्येऽपि कर्णवेधादयः संस्कारा ज्योतिःशास्त्रोक्तास्तत्र तत्र वक्ष्यंते । इति संस्कारोद्देशः ।

॥ अथ संस्क ाः ॥

तत्र गर्भाधानहेतुरजोदर्शने प्रशस्तापशस्तकालानाह नारदः

" कुलीरवृषचापांत्यनृयुक्कन्यातुलाघटाः । राशयः शुभदा ज्ञेया नारीणां प्रथमार्तवे " ॥

कुलीरः कर्कटः । चापं धनुः । अंत्यो मीनः । नृयुक् मिथुनं । घटः कुंभः । एषु सूर्ये विद्यमाने इत्यर्थः ।

"अमा रिक्ताष्टमी षष्ठी द्वादशीप्रतिपत्स्वपि । परिघस्य च पूर्वार्द्धे व्यतीपाते च वैधृतौ ॥

२. मिथुन.

" संध्यासूपप्लवे विष्ट्यामशुभं प्रथमार्त्तवं । " उपप्लवो ग्रहणं ।
तथा " रोगी पतिव्रता दुःखी पुत्रिणी भोगभागिनी । पतिव्रता क्लेशयुक्ता सूर्यवारादिषु क्रमात् "।
नक्षत्रफलमाह गर्गः
" सुभगा चैव दुःशीला वंध्या पुत्रसमन्विता । धर्मयुक्ता व्रतघ्नी च परसंतानमोहिनी ॥
" सुपुत्रा चैव दुःपुत्रा पितृवेश्मरता सदा । दीना प्रज्ञावती चैव पुत्राढ्या चित्रकारिणी ॥
" साध्वी पतिव्रता नित्यं सुपुत्रा कष्टचारिणी " । स्मृतिचंद्रिकायां
" शुक्लपक्षे सुशीला स्यात्कृष्णे सा कुटिला भवेत् । कृष्णस्य दशमीं यावन्मध्यमं फलमादिशेत् "॥
नारदः–" साध्वी पतिव्रता नित्यं सुपुत्रा कष्टचारिणी । स्वकर्मनिरता हिंस्रा पुण्या पौत्रादिसंयुता॥
" नित्यं धनकथासक्ता पुत्रधान्यसमन्विता । मूर्खाऽर्थाढ्या गुणवती दस्रक्षादिः क्रमात्फलम् " ॥
स्मृतिरत्ने
" शुभं चैव तु पूर्वाण्हे मध्यान्हे मध्यमं फलं । अपराण्हे तु वैधव्यं पूर्वरात्रौ शुभं भवेत् " ॥
कश्यपः " मलिना मंदवारे तु रात्रावपि तथैव चेति " । तथा
" अमासंक्रांतिविष्ट्यां च व्यतीपाते च वैधृतौ । परिघस्य च पूर्वार्द्धे षष्ठे च गंडातिगंडयोः ॥
" व्याघाते वज्रशूले तु नाड्यः पंचतुर्दर्शने । वैधव्यमर्थहानिं च सुतनाशं महद्भयं ॥
" वैधव्यं शत्रुवृद्धिं च दारिद्यं क्षीणजीवनं । तेजोहानिं समायाति सदा पुष्पवती क्रमात् " ॥
स्थलविशेषेण फलमाह वसिष्ठः
" ग्रामाद्बहिः परग्रामे चेत्स्यात्सा व्यभिचारिणी । पतिव्रता पतिस्थाने सुशीला गृहमध्यके ॥
" ग्राममध्ये च वृद्धिश्च विधवा च दिगंबरा । परागारे च दुःशीला आयुष्यं जलसन्निधौ " ॥
परगृह इत्यनेन पित्रादिगृहमपि गृह्यते । वस्त्रविशेषेण फलभेदमाह वसिष्ठः
" सुभगा श्वेतवस्त्रा स्याद्दृढवस्त्रा पतिव्रता । क्षौमवस्त्रा क्षितीशा स्यान्नववस्त्रा सुखान्विता ॥
" दुर्भगा जीर्णवस्त्रा स्याद्रोगिणी रक्तवाससा । नीलांबरधरा नारी विधवा पुष्पिता यदि ॥
" मलिनांबरतो नारी दरिद्रा स्यादसत्स्वला " ॥
देवरातः—"संमार्जनी काष्ठतृणाग्निशूर्पान्हस्ते दधाना कुलटा तदा स्यात् ।
" तल्पोपभोगे तपसि स्थिता चेद्दृष्टं रजो भाग्यवती तदा स्यादिति " ॥
इदं फलं प्रथमरजोदर्शन एव । रजोबिन्दुफलमाह वसिष्ठः
" वस्त्रे स्युर्विषमा रक्तबिंदवः पुत्रमाप्नुयात् । समाश्चेत्कन्यका चेति फलं स्यात्प्रथमार्तवे " ॥
शांतिमाह नारदः " निंद्यर्क्षतिथिवारेषु यदि पुष्पं प्रदृश्यते । तत्र शांतिं प्रकुर्वीत घृतदूर्वातिलाक्षतैरिति । शांतिस्तु शांतिमयूखे वक्ष्यते ।
वसिष्ठः " प्रभूतदोषं यदि दृश्यते तत्पुष्पं ततः शांतिककर्म कार्यं ।
" विवर्जयेदेव तदैकशय्यां यावद्रजोदर्शनमन्यदन्ते " ॥ एकशय्यां मैथुनं ।
अथ रजस्वलानियमाः । तत्र प्रथमर्तौ विशेषः स्मृतिचंद्रिकायाम्
" प्रथमर्तौ तु पुष्पिण्याः पतिपुत्रवती स्त्रियः । अक्षतैरासनं कृत्वा तस्मिन्स्तामुपवेशयेत् ॥
" हरिद्रागंधपुष्पाद्यैर्दद्युस्ताम्बूलकं स्रजं । दीपैर्नीराजनं कुर्यात्सदीपे वासयेद् गृहे ॥
" लवणापूपमुद्गादि दद्यात्ताभ्यः स्वशक्तितः "॥ इति । द्वितीयाद्यर्तौ दक्षः

---

१ अ. गार्ग्य । अडइरफ–मोदिनी । ३ अढफ–पद्पद; इ–ध–निपद । ४ झ वीति । ५ इदस–स्रातचरणवृत्तशान्तिमयूखे ज्ञेया ।

" अंजनाभ्यंजने घ्रानं प्रवासं दंतधावनं । न कुर्यात्सार्तवा नारी ग्रहाणामीक्षणं तथा ॥

" नखानां कृंतनं रज्जुतालपत्रादिबंधनं । दग्धे शरावे भुंजीत पेयं चांजलिना पिबेत् " ॥

वसिष्ठः " त्रिरात्रं रजस्वला स्नानाच्छुचिर्भवति । नाज्यान्नाभ्यंज्याभ्यप्सु स्नायादधः शयीत न दिवा स्वप्यान्नाग्निं स्पृशेन्न रज्जुं सृजेन्न दंतान् धावयेन्न मांसमश्नीयादिति " । चतुर्थदिने च स्नानादिना शुद्धा । तथा च स्मृत्यर्थसारे " ब्राह्मणी रजस्वला चतुर्थेऽन्हि षष्ठिमृत्तिकाभिः शौचं कृत्वा क्षत्रियादिस्त्री पादपादन्यूनमृत्तिकाभिर्विधवा द्विगुणाभिः शौचं कृत्वा मलं प्रक्षाल्य सचैलं संगवे स्नायादिति "॥ अतः सूर्योदयात्पूर्वं स्नानाचरणं दुराचार एव । इति रजस्वलानियमाः ॥

## अथ गर्भाधानं ।

तच्च ऋतौ कार्यं । तदाह याज्ञवल्क्यः ( आ. ७९ )

" षोडशर्तुर्निशाः स्त्रीणां तस्मिन्युग्मासु संविशेत् । ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत्" ।

निशाग्रहणं दिवसनिषेधार्थं । तथा च श्रुतिः " प्राणं वा एते प्रस्कंदंति ये दिवा रत्या संयुज्यंते ब्रह्मवर्चसमेव तद्यद्रात्रौ संयुज्यंत " इति ।

शंखलिखितावपि " नार्तवेऽपि दिवा व्रजेदिति " । आद्याश्चतस्र इति चतुर्थदिने रजसोऽनिवृत्तौ ज्ञेयं । रजोनिवृत्तौ तु देवलः " तस्मात्त्रिरात्रं दारान्वै पुष्पितान्परिवर्जयेदिति " । हिरण्यकेशिसूत्रमपि " चतुर्थ्यां स्नातां प्रयतवस्त्रामलंकृतां ब्राह्मणसंभाषामाचम्योपव्हयत ' इति । ब्राह्मणसंभाषां प्रशस्तब्राह्मणेन कृतसंभाषणां । आपस्तंबः

" स्नानं रजस्वलायास्तु चतुर्थेऽहनि शस्यते । गम्या निवृत्ते रजसि नानिवृत्ते कथंचनेति "॥

युग्मासु फलमाह मनुः ( ३।४८ ) " युग्मासु पुत्रा जायंते स्त्रियोऽयुग्मासु रात्रिष्विति " ॥

एकस्यां सकृदेव गच्छेत् । यथोक्तं ( या. व. आ. ८० )

" एवं गच्छन स्त्रियं क्षामं मघां मूलं च वर्जयेत् । सुस्थ इंदौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमानिति"।

सुस्थे एकादशादिस्थानस्थिते । क्षामता चास्निग्धभोजनादिना कार्या रजःक्षयार्थं । यथोक्तं ( मनु० ३।४९ ) " पुमान्पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रिया " इति । तत्र युग्मासु शोणिताधिक्ये पुरुषाकृतिः स्त्री अयुग्मासु शुक्राधिक्ये स्त्र्याकारः पुमानिति ज्ञेयं । शुक्रशोणितयोरुपादानकारणत्वात् । ब्रह्मचार्येवेति यत्र ब्रह्मचर्यं विहितं श्राद्धभोजनादौ तत्र गमने दोषः

पर्वाणि विष्णुपुराणे

" चतुर्दश्यष्टमी चैव अमावास्याथ पूर्णिमा । पर्वाण्येतानि राजेंद्र रविसंक्रांतिरेव चेति "

अगमने दोषमाह पराशरः

१ अठहरः—नाथकृत । २ अडहरः—नराकारः ।

"ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति। घोरायां भ्रूणहत्यायां युज्यते नात्र संशय"॥ इति क्वचित्स्वस्थः सन्निति पाठः

## अथ गमने निषिद्धकालाः

मनुः ( ४।१२८ )

"अमवास्यामष्टमीं च पौर्णमासीं चतुर्दशीं । ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः"॥ इति। ज्योतिःशास्त्रे "पित्र्यं पौष्णं नैर्ऋतं चैव धिष्ण्यं त्यक्त्वा नारीं सुप्रसन्नः प्रसन्नां । "पुष्टः क्षामां पुत्रकामोऽभिगच्छन् सल्लक्षण्यं पुत्रमाप्नोति पित्र्यं"। यौगपद्ये देवलः "यौगपद्ये तु तीर्थानां विप्रादि क्रमशो व्रजेत् । रक्षणार्थमपुत्रां वा ग्रहणक्रमतोऽपि वेति"॥ तीर्थरजः। विशेषमाह याज्ञवल्क्यः (आ०८) "यथाकामी भवेद्वाऽपि स्त्रीणां वरमनुस्मरन्निति"॥ यथाकामी ऋतुं विनाऽपि स्त्रीकामेनायां स्त्रियमभिरमयेत् ।

एवं च "ऋतुं नोपैति यो भार्यामनृतौ यश्च गच्छति। तुल्यमाहुस्तयोः पापमयोनौ यश्च सिंचतीति" बौधायनीयेऽनृतुगमननिषेधः। स स्त्रिया अकामनायां ज्ञेयः। गर्भिणीगमनमप्यनुज्ञानात्यात्रिः "षण्मासात्कामयेन्मर्त्यो गर्भिणीं स्त्रियमेव हि। आदंतजननादूर्ध्वमेवं धर्मो न हीयत"॥ इति बालके जाते तस्य दंतजननादूर्ध्वं गच्छेदित्यर्थः। स्त्रीणामप्यगमने दोष इति हेमाद्रौ "ऋतुस्नाता तु या नारी भर्तारं नोपगच्छति। तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं तु विवासयेदिति"॥ अत्र "ऋतुकालाभिगामी स्याद्यावत्पुत्रोऽभिजायत" इति कूर्मपुराणवाक्येनैकपुत्रोत्पादनेन शास्त्रार्थस्य कृतत्वादानृण्ये च जाते न पुत्रांतरोत्पादनमावश्यकमिति केचित् ।

तन्न । यद्यप्यानृण्यं जातं तथापि एकपुत्रनिंदापूर्वकं बहुपुत्रप्राशस्त्यमुक्तं भारते "अपत्यं तु ममैवैकं कुले महति भारत । अपुत्रं चैकपुत्रत्वमित्याहुर्धर्मवादिनः॥

"चक्षुरेकं च पुत्रश्च अस्ति नैव च भारत। चक्षुर्नाशे तनोर्नाशः पुत्रनाशे कुलक्षय"॥ इति। तथा ऋतुस्नातां तु यो भार्यामित्यस्य एकपुत्रानंतरं ऋतौ जाते प्रत्यभिधानात्। तथार्थर्वादेऽपि "एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्। यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेदिति॥" अतो बहुपुत्रोत्पत्तिरप्रतिषेधात्प्राशस्त्याच्च कर्त्तव्या ।

आश्वलायनः

## अथ गुर्विणीपतिधर्माः ।

"वपनं मैथुनं तीर्थं वर्जयेद्गुर्विणीपतिः। श्राद्धं च सप्तमान्मासादूर्ध्वं चान्यत्र वेदवित्"॥ श्राद्धे श्राद्धभोजनमिति केचित्। अत्र प्रमाणं मृग्यं। अन्यत्कालविधानव्याख्योक्तं सप्तमान्मासादिति सर्वत्र ज्ञेयं।

"क्षौरं शवानुगमनं नखकृंतनं च श्राद्धं च वास्तुकरणं त्वतिदूरयानं ।
"उद्वाहमंबुधिजले गमनं तथैवमायुःक्षयं भवति गर्भिणिकापतीनां"॥ क्वचित्तु। "उद्वाहमौपनयनं जलधेश्च गाहमिति" पाठः। ज्योतिपरत्ने गालवः

"दहनं वपनं चैव चौलं वै गिरिरोहणं । नाव आरोहणं चैव वर्जयेद्गुर्विणीपतिः॥

१ ट-पुष्य, अड्र-पुष्यं। २ अड्ड-तीर्थे। ३ फ-क्ष्मायां।

" प्रव्यक्तगर्भापतिरव्धियानं मृतस्य वाहं क्षुरकर्मसंगं ।
" तस्यां तु यत्नेन गयादितीर्थं यागादिकं वास्तुविधिं न कुर्यात् ॥" आयुःक्षयं तत्साधनं।
पद्मपुराणेऽविर्तिप्रतिकाश्यपः अथ गुर्विणीनियमाः ।
" नावस्करेपूपाविशेन्मुसलोलूखलादिपु । जलं च नावगाहेत शून्यागारं च वर्जयेत् ॥
" विलिखेन्न नखैर्भूमिं नांगारेण न भस्मना १ न शयालुः सदा तिष्ठेद्व्यायामं च विवर्जयेत् ॥
" न तुषांगारभस्मास्थिकपालेपु च संविशेत् । वर्जयेत्कलहं लोकैर्गात्रभंगं तथैव च ॥
" न शयीतोत्तरशिरा न चैवाधःशिराः क्वचित् । न वस्त्रहीना नोद्विग्ना न चार्द्रचरणा सती "॥

मात्स्ये

" संध्यायां हि न भोक्तव्यं गर्भिण्या वरवर्णिनि । न स्थातव्यं न गंतव्यं वृक्षमूलेषु सर्वदा ॥
" न शयालुः सदा तिष्ठेत्सद्राछाया विवर्जयेत् । सर्वौषधीभिः कोष्णेन वारिणा स्नानमाचरेत् ॥
" दानशीला तृतीयायां पार्वत्या भक्तिमाचरेत् ॥
" गर्भिणी कुंजराश्वादिशैलहर्म्यादिरोहणं । व्यायामं शीघ्रगमनं शकटारोहणं त्यजेत् ॥
" शोकं रक्तविमोक्षं च साध्वसं कुक्कुटासनं । व्यवसायं दिवास्वापं रात्रौ जागरणं त्यजेत् ॥
" अतिक्षारं तु नाश्नीयादत्यम्लमतिभूरि च । अत्युष्णमतिशीतं च गुर्वाहारं परित्यजेत् ॥
" यस्तु तस्या भवेत्पुत्रः स्थिरायुर्वृद्धिसंयुतः । अन्यथा गर्भपतनं सा चाप्नोति न संशय" ॥ इति।
यात्राविषये बृहस्पतिः

"चतुर्थे मासि षष्ठे वाऽप्यष्टमे गर्भिणी यदा । यात्रा नित्यं विवर्ज्या स्यादाषाढे तु विशेषतः"॥
चतुर्थात्षष्ठादष्टमादारभ्येत्यर्थः।इदं च समर्थासमर्थस्त्रीपरं। अत्यसमर्थायास्तु चतुर्थमासादारभ्यैव यात्रा वर्ज्येत्यर्थः। आषाढे तु सर्वमासेषु दोहदमप्यवश्यं प्रदेयमित्याह याज्ञवल्क्यः (प्रा. ७९)
" दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात् । वैरूप्यं मरणं वाऽपि तस्मात्कार्यं प्रियं स्त्रियाः"॥

इति गर्भाधानं ॥

## अथ पुंसवनं ।

याज्ञवल्क्यः ( आ. ११ ) " गर्भाधानमृतौ पुंसः सवनं स्पंदनात्पुरेति " । गर्भचलनकालः शारीरके ", तस्माच्चतुर्थे मासि चलनादावभिप्रायं करोतीति " । पारस्करः " मासे द्वितीये तृतीये वा यदहः पुंसा नक्षत्रेण चंद्रमा युक्तः स्यादिति " । पुन्नक्षत्राणि तु "हस्तो मूलः श्रवणः पुनर्वसुमृगशिरास्तथा पुष्यः । पुंसंज्ञकेषु कार्येष्वेतानि शुभानि धिष्ण्यानि " ॥
विशेषमाह जातूकर्ण्यः

" द्वितीये वा तृतीये वा मासि पुंसवनं भवेत् । व्यक्ते गर्भेऽथ वा कार्यं सीमंतेन सहाथवेति " ॥
व्यक्ते अन्येनानुक्तेऽपि ज्ञातुं शक्ये । अत्र सति संभवे शुक्रास्तमलमासादि वर्ज्यं । असंभवे तत्रापि कार्यमावश्यकत्वात् । इदं च चंद्रताराबले कार्यं । पुंसवनं प्रकृत्य " बलोपपन्ने

१ र गुर्विणीपतिनियमा । २ फ हारीत·

दंपत्योश्चंद्रताराबलान्विते " इति नारदवचनात् । इदं च पुमान् सूयत अनेनेति व्युत्पत्त्या कर्मनामधेयं । तच्च कर्म पंचसहितमाषद्वययुक्तदधिप्राशनं । अत्र कांश्चित्कालान्निषेधति बृहस्पतिः " कुलीरं मिथुनं कन्यां हित्वा शेषाः शुभावहाः " इति ॥ इति पुंसवनं ॥

## अथानवलोभनं॥

वैजवापगृह्ये " अथ पुंसवनानवलोभने करोति मासि द्वितीये वा तृतीये वेति "। इदं च पुंसवनदिन एव तदुत्तरं कार्यम् । पुंसवनमुक्त्वाऽथास्यै मंडलागारछायायामजीतामोषधीं नस्तः करोत्याश्वलायनगृह्ये ( १।१३।५ ) क्रमाम्नानात् । इदमपि तस्य रूपकर्मणो न अवलुप्यते गर्भोऽनेनेति व्युत्पत्त्या गर्भाविनाशफलकं यत्कर्म तस्य नामधेयं । भकारश्छांदसः । तथा च मंत्रलिंगमाह ( १।१३।७ ) " पौत्रमघं मा निमायामिति "। पुत्रसंबंधि अघ पापं मा निमायां मा प्राप्नुयामिति । एवं च नाशकारणपापाभावाद्गर्भानाश इति । एते च कर्मणी गर्भसंस्कारत्वात्प्रतिगर्भमावर्त्तेते इति नारायणः । तन्मते " सकृत्संस्कृता नारी सर्वगर्भेषु संस्कृतेति " देवलवाक्यं सीमंतोन्नयनविषयमेवेति प्रतीमः । विज्ञानेश्वरस्तु पुंसवनस्यापि सकृदनुष्ठानमिच्छति । तत्र युक्तिश्चिंत्या । इत्यनवलोभनं ॥

## अथ सीमंतोन्नयनं ॥

आपस्तंबः " सीमंतोन्नयनं प्रथमे गर्भे चतुर्थे मासीति "। सांख्यायनगृह्येऽपि " सप्तमे मासि प्रथमे गर्भे सीमंतोन्नयनमिति "। याज्ञवल्क्यः ( आ. ११ ) " षष्ठेऽष्टमे वा सीमंत " इति । आश्वलायनः ( १।१४।२ ) " आपूर्यमाणपक्षे यदा पुंसा नक्षत्रेण चंद्रमा युक्तः स्यादिति "। पूर्यमाणपक्षः शुक्लपक्षः । पुंनक्षत्राण्युक्तानि । इदं च सकृदेव कार्यम् । प्रथमे गर्भ इति सांख्यायनापस्तंबोक्तेः । स्त्रीसंस्कारत्वाच्च । " सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृतेति " वचने प्रवृत्तेः । यत्तु स्मृतिचंद्रिकायां विष्णुः (पृ. १७पं.२२) " सीमन्तोन्नयनं कर्म तत्स्त्रीसंस्कार इष्यते । केचित्तु गर्भसंस्काराद्गर्भे गर्भे प्रयुंजते " ॥ इति तत्र केचिच्छब्दाद्नादरः स्पष्टः । हारीतस्तु स्पष्टमेवाह

"सकृत्संस्कृतसंस्काराः सीमंतेन द्विजस्त्रियः । यं यं गर्भं प्रसूयंते स सर्वः संस्कृतो भवेदिति"॥

इदं च देवज्ञोदिते शुभमुहूर्ते कार्यं । यथाह गर्गः

" सीमंतोन्नयनं कार्यं शुभांशे शुभलग्नके । कुलीरमृगकन्याश्च वर्ज्याः शेषाश्च शोभनाः"॥इति। अत्रापि शुक्रास्तादिव्यतिरिक्तकाललाभे न तत्र कार्यमन्यथाऽस्तादावपि । इति नियतकालत्वात्। सीमंते च भोक्तुर्दोषमाह धर्मप्रकाशे धौम्यः

"मत्स्यौदने च सोमे च सीमंतोन्नयने तथा । जातश्राद्धे नवश्राद्धे भुक्त्वा चांद्रायणं चरेदिति"॥

मत्स्यौदनसाधनांगभूतं जातश्राद्धं । पुत्रे जाते वृद्धिश्राद्धं ।

अजातसीमंतायाः प्रसूतौ सत्यव्रत आह

" *स्त्री यदाऽकृतसीमंता प्रसूयेत कदाचन । गृहीतपुत्रा विधिवत्पुनःसंस्कारमर्हति* " ॥

---

१ डर कुलीर । २ र-मानी; फ-मनी अ-मजा । ३ " पौत्रमघंनियाम् " इति आश्वलायनीये पाठः; अ-पौत्रमघं वियामिति । ४ अडरफ कर्मणी । ५ दहरअ सकृत्तु कृतसंस्काराः ॥ ६ र-ऽथवा । ७-र श्रीर, फअह-श्रद्दे ।

पुनः पादपूरणार्थं । यः संस्कारोऽतिक्रांतः स कर्तव्य इत्यर्थः । इति सीमंतोन्नयनं ॥

सूतिकागृहमाह वसिष्ठः

" ऐंद्रे तु विक्रमस्थानमाग्नेये सूतिकागृहं । याम्यायां शयनस्थानं वायव्यां पशुमंदिरं ॥
" कौबेर्यां तु धनस्थानमैशान्यां देवतालय " इति । पद्मपुराणे पारस्करः
" प्रविशेत्सूतिकागारं कृतरक्षं समंततः । प्राग्द्वारमुत्तरद्वारमथ वा सुदृढं शुभं ॥
" देवानां ब्राह्मणानां च गवां कृत्वा च पूजनं । एरंडमूलचूर्णेन सघृतेन तथैव तां ॥
" सुखप्रसवनार्थाय पश्चात्कायेऽनुलेपयेदिति " ॥

अथ जातकर्म ॥

तत्र ऽपत्ये जाते स्नानमाह संवर्तः " जाते पुत्रे पितुः स्नानं सचैलं तु विधीयत " इति पुत्रे इति पुंस्त्वमविवक्षितं अनुवाद्यविशेषणत्वात् । पृथ्वीचंद्रोदये कार्ष्णाजिनिः " प्रादुर्भावे पुत्रपुत्र्योर्ग्रहणे चंद्रसूर्ययोः । स्नात्वाऽनन्तरमात्मीयान्पितॄञ्श्राद्धेन तर्पयेत् " । इदं च शीताभिरद्भिः कार्यम् । तदाह जाबालिः " कुर्यान्नैमित्तिकं श्राद्धं शीताद्भिः काम्यमेव चेति " । इदं च रात्रावपि कार्यमित्याह व्यासः

"रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः । नैमित्तिके च कुर्वीत स्नानं दानं च रात्रिषु"॥ इति ।
" ग्रहणोद्वाहसंक्रांतियात्रार्तिप्रसवेषु च । दानं नैमित्तिकं ज्ञेयं रात्रावपि न दुष्यतीति " ॥

संवर्तः " माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः " । जैमिनिः

" यावन्न छिद्यते नालं तावन्नाप्नोति सूतकं । छिन्ने नाले ततः पश्चात्सूतकं तु विधीयत " इति ॥

अस्माद्वचनान्नालच्छेदोत्तरमेवाशौचप्रवृत्तिरिति भाति । प्रांचस्तु यावन्न छिद्यते नालं तावच्छिशुमृतौ पूर्णं सूतकं नाप्नोति । नालछेदोत्तरं तु शिशुमृतौ संपूर्णं प्राप्नोतीति व्याचख्युः । एवं च ज्ञायते तेषां जन्मोत्तरमेवाशौचप्रवृत्तिरिष्टेति । युक्तं चेदं । आशौचं जननोत्तरमेव प्रवर्तते । जातकर्मवृद्धिश्राद्धदानादौ तु तात्कालिकी शुद्धिर्वचनेन बोध्यते । " कर्तुस्तात्कालिकी शुद्धिरिति " वत् । एवं च स्नानोत्तरं संध्यादिकं न भवत्येवेति दिक् दानार्थं दिनमनुज्ञातमादिपुराणे

" देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनां । आयांति तस्मात्तदहः पुण्यं पूज्यं च सर्वतः ॥
" तत्र दद्यात्सुवर्णं तु भूमिं गां तुरगं रथमिति " । पुत्रमुखावलोकनस्य फलमाह वसिष्ठः
" जातमात्रकुमारस्य मुखमस्यावलोकयेत् । पिता ऋणाद्विमुच्येत पुत्रस्य मुखदर्शनादिति " ॥

आशौचांतरेऽपि पुत्रे जाते तात्कालिकी शुद्धिमाह प्रजापतिः

" सूतके तु समुत्पन्ने पुत्रजन्म यदा भवेत् । कर्तुस्तात्कालिकी शुद्धिरिति " ॥

---

१–२ पितुः पुत्रे । २ ख इ–जाते पुत्रे पितुः स्नानं सचैलं सूर्यसोमयोः । स्नात्वाऽनन्तरमात्मीयान् पितॄन् श्राद्धेन तर्पयेत् । ३ इ याः । ४ फ शंखः । ५ इ व ।

जातकर्मणि प्रधानमाहाश्वलायनः "कुमारं जातं पुराऽन्यैरालंभात्सर्पिर्मधुनी हिरण्यनिकाषं हिरण्येन प्राशयेदिति"। कात्यायनसूत्रे तु विशेषः "अनामिकया सुवर्णांतर्हितया मधुघृते प्राशयति घृतं वेति"[1]। तत्कालमाह गर्गः

"जातमात्रकुमारस्य जातकर्म विधीयते। स्तनप्राशनतः पूर्वं नाभिकर्त्तनतोऽपि वेति"॥

पूर्वमित्यर्थः। मनुः (२।२९)

"प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते। मन्त्रवत्प्राशयेच्चास्य हिरण्यमधुसर्पिषी"॥

वर्द्धनं छेदः। अत्र पुंस्त्वमविवक्षितम्। अनुवाद्यविशेषणत्वादिति केचित्। मेधातिथिस्तु विवक्षितमेव पुंस्त्वं। तेन नपुंसकस्य न भवति। स्त्रियास्तु वाक्यांतरप्राप्तत्वादमंत्रकं भवत्येवेत्याह। अत्र च वृद्धिश्राद्धमामेन कार्यमित्याह प्रचेताः

"स्त्रीशूद्रः श्वपचश्चैव जातकर्मणि चाप्यथ। आमश्राद्धं सदा कुर्याद्विधिना पार्वणेन तु"॥

श्वपचः श्वयं पचः। हेमाद्रौ संवर्तस्तु हेम्नैवाह

"पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान्। न पक्वेन न चामेन कल्याणान्यभिकामयन्" इति।

अत्र नैमित्तिककाम्यभेदेन आमहेमव्यवस्था द्रष्टव्या।

यदा तु पुत्रजन्म मूलादिनक्षत्रेषु तदा मुखावलोकनजातकर्मादिशांतिं विना न कुर्यात्। एवं संक्रांतिविष्ट्यादावपि। शांतिस्तु शांतिमयूखे ज्ञेया। पुरुषापराधेन काले जातकर्माननुष्ठाने कालांतरमाह बैजवापः

"जन्मनोऽनंतरं कार्यं जातकर्म यथाविधि। दैवादतीतकाले चेदतीते सूतके भवेदिति"॥

अस्य फलमाहाश्वलायनः

"गर्भाम्बुपानदोषाणामपनुत्यै शिशुं पिता। प्राशयेन्मधुना सार्द्धं साज्यं हैमरसं शुभमिति"॥

स्त्रीणामप्येतदमंत्रकं कार्यं। इति जातकर्म॥

दशदिनमध्ये विशेषमाह व्यासः

"सूतिकावासनिलया जन्मदा नामदेवताः। तासां यागनिमित्तं तु शुद्धिर्जन्मनि कीर्तिता॥

"प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा। त्रिष्वाशौचं न कुर्वीत सूतके पुत्रजन्मनीति"॥

"दद्यात्तु प्रथमे हेम षष्ठे वा सप्तमेऽपि वा। बलिदानं तु दशमे अन्नदानं प्रशस्यत" इति॥

अत्राशौचाभावो दानादिविषय एव न संध्यादिविषये। मार्कंडेयोऽपि

"रक्षणीया तथा षष्ठी निशा तत्र विशेषतः। रात्रौ जागरणं कार्यं जन्मदानां तथा बलिः॥

"पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः। रात्रौ जागरणं कुर्युर्दशम्यां चैव सूतके॥"

नारदोऽपि

"जननात्सप्तमे चाह्नि मृत्युरायाति घातकः। दिने दिने च रक्षेयं कर्तव्याऽऽयुर्विवृद्धये॥" इति।

प्रथमादिदिनकृत्यं। आश्वलायनगृह्ये जातकर्मोत्तरं कालांतरमनुक्त्वा नाम चास्मै दद्युर्घोषवदाद्यंतरंतःस्थमभिनिष्ठानांतं द्व्यक्षरं चतुरक्षरं वा द्व्यक्षरं प्रतिष्ठाकामश्चतुरक्षरं ब्रह्मवर्चसकामो युग्मानि त्वेव पुंसामयुग्मानि स्त्रीणामभिवादनीयं च समीक्षेत तन्मातापितरौ विद्यातामोपनयनादिति"

---

१ दइ–+पूर्वमित्यर्थे। २ ई–अत्राद्दि। रअद–मत्र। ३ झ–श्व ४ झ–वस्यते। ५ झफ–भवेदिति।
६ ई–प्र। ७ झ–+दिवसे षष्ठे। ८ झ–स्वर्णं; दइअ–स्वन्न ९ अबदफ–दानं। १० झ–चंतरंत–।

अत्र दिवसानुपादानाद्दैवज्ञोदितं तन्मासस्थं शुभं दिनं ग्राह्यं । कारिकायां विशेषः
" आदाय गेहान्निष्क्रम्य गच्छेयुर्देवतालयं । अभ्यर्च्य देवता सम्यगाशिषो वाचयेदथ ॥
" कृत्वा प्रदक्षिणं गेहमानयंति ततः स्वकं । मातृष्वसृगृहं वापि मातुलादेर्गृहं नयेत् ॥
" तदाशीर्वचनाद्यैः स्याद्दीर्घायुरभिनंदितः । जयंतस्य मतेनायं लिखितः शिशुनिष्क्रमः " ॥ इति । मातुलादिर्बालस्य ।

इति निष्क्रमणं ॥

उपवेशनमुक्तं पद्मपुराणे
" पंचमे च तथा मासि भूमौ तमुपवेशयेत् । तत्र सर्वे ग्रहाः शस्ता भौमो राम विशेषतः ॥
" वराहं पूजयेद्देवं पृथिवीं च तथा द्विजः । पूजनं पूर्ववत्कृत्वा गुरुदेवद्विजन्मनां ॥
" भूभागमुपलिप्याथ कृत्वा तत्र तु मंडलं । शंखपुण्याहशब्देन भूमौ तमुपवेशयेत् " ॥
तत्र मंत्र उक्तस्तत्रैव
"रक्षैनं वसुधे देवि सदा सर्वगतं शिशुमिति"। आयुःप्रमाणं निखिलं निक्षिपस्व हरिप्रिये ॥
" अचिरादायुषस्त्वस्य ये केचित्परिपंथिनः । जीवितारोग्यवित्तेषु निर्दहस्वाचिरेण तान् ॥
" धारिण्यशेषभूतानां मातस्त्वमधिका ह्यसि । कुमारं पाहि मातस्त्वं ब्रह्मा तदनुमन्यतामिति "।

इत्युपवेशनं ॥

अन्नप्राशनमाह यमः
" ततोऽन्नप्राशनं मासि षष्ठे कार्यं यथाविधि । अष्टमे वाऽथ कर्त्तव्यं यद्येवं मंगलं गृहे इति "। कुले यदैव मंगलं तदैव कार्यमिति । कालांतरं लौगाक्षिः "षष्ठे मासेऽन्नप्राशनं जाते दन्तेषु वा पूर्णे संवत्सरे वेति"। अत्रापि दिनविशेषानुपादानाद्दैवज्ञोदितं शुभं दिनं ग्राह्यं
कर्त्तव्यमाह मार्कंडेयः
" देवतापुरतस्तस्य धात्र्युत्संगगतस्य च । अलंकृतस्य दातव्यमन्नपात्रेऽथ कांचने ॥
" मध्वाज्यकनकोपेतं प्राशयेत्पायसं तु तमिति " । आश्वलायनगृह्ये तु विशेष ( १।१६।१-४ ) " षष्ठे मास्यन्नप्राशनमाजमन्नाद्यकामस्तैत्तिरं ब्रह्मवर्चसकामो घृतौदनं तेजस्कामो दध्योदनमिंद्रियकामो मध्वोदनमायुष्कामो दधिमधुघृतामिश्रमन्नं प्राशयेत्सर्वकामो भवतीति विज्ञायते"। आजं मांसं तित्तिरसमभिव्याहारात् । तत्र व्यंजनस्थानीयत्वान्मांसस्थानं ग्राह्यमेव अन्नप्राशने फलाधिक्यमाश्वलायनस्मृतौ " स्वमलप्राशनाच्छुद्ध्यै प्राशयेच्चायुषेऽपि वेति" ।

इत्यन्नप्राशनं ॥

तदुत्तरं जीविकापरीक्षोक्ता मार्कंडेयेन
" देवाग्रतोऽथ विन्यस्य शिल्पभांडानि सर्वशः । वस्त्राणि चैव शस्त्राणि ततः पश्येत्तु लक्षणं"
शिल्पस्य लेखनादेर्भांडं वस्तुलेखनी मषीपात्रादि । शस्त्रं युद्धवस्तु ।
" प्रथमं यत्स्पृशेद्बालस्ततो भांडं स्वयं तदा । जीविका तस्य बालस्य तेनैव तु भविष्यतीति"

इति जीविकापरीक्षा

---

१ ह्ह-अष्टमे । २ ढइ-तस्य, ह्ह-स्वन । ३ ह्ह-जाते तु या पूर्णे ।

चूडाकर्माह मनुः ( २।३५ )
" चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः । प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात्" ॥
यमः " द्वितीये वा तृतीये वा कर्त्तव्यं श्रुतिचोदनादिति " ॥ आश्वलायनः ( १।१७।१ )
" तृतीये वर्षे चौलं यथाकुलधर्मं वेति" । तथा "उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलः कर्मोपनयनगोदानविवाहा " इति ( १।४।१ ) । कारिकायां " यथाकुलं च केषांचिदुपनीत्या-सहेष्यत " इति । आश्वलायनस्मृतौ
" तृतीये वत्सरे चौलं कुर्वीतास्योत्तरायणे । शुक्लपक्षे शुभर्क्षे तु कृत्वाभ्युदयिकं तथा" ॥ शुभर्क्षे इति ज्योतिर्विदुपदिष्टे मुहूर्ते इत्यर्थः । प्रयोगपारिजाते नारदः
" जन्मनस्तु तृतीयेऽब्दे श्रेष्ठमिच्छन्ति पण्डिताः । पञ्चमे सप्तमे वाऽपि जन्मतो मध्यमं भवेत्" ॥
" अधमं गर्भतः स्यात्तु नवमैकादशेऽपि चेति " ॥ तत्रैव
" आद्येऽब्दे कुर्वते केचित्पञ्चमेऽब्दे द्वितीयके । उपनीत्या सहैवेति विकल्पः कुलधर्मतः" ॥ इति ।
विवाहचंडेश्वरः
" गर्भे मासि तथा ज्येष्ठे क्षौरं परिणयं व्रतं । ज्येष्ठपुत्रदुहित्रोस्तु यत्नेन परिवर्जयेत् " ॥
त्त्वशते " न जन्मधिष्ण्ये न च जन्ममासे न जन्मकालीयदिने विदध्यात् ॥
ज्येष्ठे न मासे प्रथमस्य सूनोस्त्वाद्यायाः सुताया अपि मंगलानीति" ॥ नक्षत्राणि निषेधति व्यासः
' नक्षत्रे तु न कुर्वीत यस्मिन् जातो भवेन्नरः । न प्रौष्ठपदयोः कार्यं नैवाग्नेये च भारत ॥
' तिथिं प्रतिपदं रिक्तां विष्टिं चैव विवर्जयेत्" । विहितान्यपि तेनैवोक्तानि
' अश्विनी श्रवणः स्वाती चित्रा पुष्यः पुनर्वसुः । धनिष्ठा रेवती ज्येष्ठा मृगहस्तेषु कारयेदिति" ॥
ोरमिति शेषः । अन्ये च नक्षत्रयोगकरणविधिनिषेधा ज्योतिःशास्त्रादवसेयाः ।
ात्रविशेषेण विशेषमाह लौगाक्षिः " दक्षिणतः कमुंजा वसिष्ठानामुभयतोत्रिकश्यपानां मुंडा ृगवः पंचचूडा आंगिरसो बालिमेके मंगलार्थशिखिनोऽन्ये यथाकुलधर्मं " । कमुंजा चूडा । ्वचित् कुमुंजेति पाठः । अन्ये बालकेशपंक्तिं कुर्वंति । अंते समरेखया मुंडनं कृत्वा सर्व एव केशाः स्थाप्या इति स्मृतिचंद्रिकायां । आपस्तंबस्तु विशेषमाह " केशान्विनीय यथार्षि शिखां निदधाति । यथैषां कुलधर्मः स्यादिति" । यथाप्रवरं । एते संस्काराः स्त्रीणां मंत्ररहिताः । एतेषां जातकर्मादीनां लोपे प्रायश्चित्तमाह शौनकः
" एतेष्वेकैकलोपेऽपि पादकृच्छ्रं समाचरेत् । चूडाया अर्द्धकृच्छ्रं स्यादापदि त्वेवमीरितं ॥
" अनापदि तु सर्वत्र द्विगुणं द्विगुणं चरेदिति" । अतीतानां कालमाह मनुः
" जातकर्मादिसंस्काराः स्वकाले न भवंति चेत् । चौलादर्वाक् प्रकुर्वीत प्रायश्चित्तादनंतरं" ॥
गृह्यकारिकायां विकल्प उक्तः
" प्रायश्चित्ते कृते पश्चादतीतमपि कर्म वै । कार्यमित्येक आचार्या नेत्यन्ये तु विपश्चित" ॥ इति ।
शिष्टानां तु करणपक्ष एव संमतः । विशेषांतरमाह नारदः
" शिशोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् । पंचमाब्दादधोर्ध्वं तु गर्भिण्यामपि कारयेत् ॥

---

१ ङ-अधर्म । २ ङ-गर्ग; रङ्ग-मार्ग । ३ ङ-बालि ।

" सहोपनीत्या कुर्याच्चेत्तत्र दोषो न विद्यत " इति । पंचमाब्दात्पूर्वमपि पंचमासपर्यंतं गर्भिण्यां न दोषः । तदाह मदनरत्ने बृहस्पतिः

" गर्भे मातुः कुमारस्य न कुर्याच्चौलकर्म तु । पंचमासादधः कुर्यादत ऊर्ध्वं न कारयेत् " ॥ मातरि रजस्वलायां मेधातिथिः

" चौले च व्रतबंधे च विवाहे यज्ञकर्मणि । भार्या रजस्वला यस्य प्रायस्तस्य न शोभनम् " ॥

वृद्धमनुः

" विवाहव्रतचूडासु माता यदि रजस्वला । तदा न मंगलं कार्यं शुद्धौ कार्यं शुभेप्सुभिः " ॥ इति ।

इति चूडाकर्म ।

विद्यारंभमाह मार्कंडेयः

" प्राप्तेऽथ पंचमे वर्षे विद्यारंभं तु कारयेत् । ततः प्रभृत्यनध्यायान्वर्जनीयान्विवर्जयेदिति " ॥ वर्जनीयान् नित्यान् । दर्शादीन् । विद्यारंभश्चात्राक्षरपरिचितिः । यथाह श्रीधरः

" उदगते भास्वति पंचमेऽब्दे प्राप्तेऽक्षरस्वीकरणं शिशूनां ।

" सरस्वतीं विघ्नविनायकं च गुर्वोदनाद्यैरभिपूज्य कुर्यात् " ॥ विष्णुधर्मोत्तरे पुष्करः

" प्राप्ते तु पंचमे वर्षे अप्रसुप्ते जनार्दने । षष्ठीं प्रतिपदं चैव वर्जयित्वा तथाऽष्टमीं ॥

" रिक्तां पंचदशीं चैव सौरभौमदिने तथा । एवं सुनिश्चिते काले विद्यारंभं तु कारयेत् " ॥ इति विद्यारंभः । अथानुपनीतधर्माः । गौतमः (अ. २ सू. १) " प्रागुपनयनात्कामचारकामवादकामभक्षा " इति । कामचारोऽगम्यादिदेशगमनं । कामवादोऽश्लीलादिभाषणमनृतभाषणं च । कामभक्षो लशुनपर्युषितभक्षणं । कामभक्षादिकं महापातकातिरिक्तविषयं " स्यात्कामचारभक्षोक्तिर्महतः पातकादृत " इति षट्त्रिंशन्मतात् । गौतमः ( २।४-५ ) " न पादमूत्रपुरीषो भवति न तस्याचमनकल्पो विद्यते " । न तस्योदङ्मुखो दिवारात्रौ दक्षिणामुख इत्यादयो नियमाः । स एव ( २।६-७ ) " अन्यत्रावमार्जनप्रक्षालनप्रोक्षणेभ्यो न तस्य स्पर्शनादशौचमिति " । इदं कृत्वा स्पर्शनं कार्यमित्यर्थः । स्मृतिदीपिकायां

" शिशोरभ्युक्षणं प्रोक्तं बालस्याचमनं स्मृतमिति । रजस्वलादिसंस्पर्शे स्नानमेव विधीयत " ॥ इति तल्लक्षणानि तत्रैव

" प्राक्चूडाकरणाद्बालः प्रागन्नप्राशनाच्छिशुः । कुमारकस्तु विज्ञेयो यावन्मौंजी न बध्यते ॥ " इति बालं प्रकृत्य गौतमः ( २।८ ) " न त्वेवैनमग्निहवनबलिहरणयोर्नियुंज्यादिति " ॥

मनुः ( २।१७१-१७२ )

" न ह्यस्मिन्युज्यते कर्म यावन्मौंजी न बध्यते । नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते " ॥

ब्रह्म वेदः । स्वधानिनयनं प्रेतकर्म । इत्यनुपनीतधर्माः ।

उपनयनमुक्तं श्रुतौ " अष्टवर्षं ब्राह्मणमुपनयीतेति " ।

याज्ञवल्क्यः ( आ. १४ )

" गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनं । राज्ञामेकादशे सैके विशामेके यथाकुलमिति

१ अहई-गर्भे । २ अइड-प्राप्ते तु; र-प्राप्ते तु । ३ अइड-रोमादि । ४ अपमार्जनेति गौतमी पाठ । ५ तदुपस्पर्शनात् ।

त्रैके द्वादशे । गर्भैकादशे गर्भद्वादशे द्वादशे वैश्यस्येत्याह **पैठीनसिरपि** " गर्भपंचमे ब्राह्मणमुपनयेदिति " । गुणफलमाह **मनुः** ( २।३७ )

" ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पंचमे । राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे " ॥ इति । **आपस्तंबः** ( ध. सू. १।१।२१–२६ ) " सप्तमे ब्रह्मवर्चसकाममष्टम आयुःकामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादश इंद्रियकामं द्वादशे पशुकाममिति " । वर्णविशेषेण ऋतुनियम उक्तः **श्रुतौ**[1] । " वसंते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यमिति " । * अत्र च माणवककर्तृकगुरुसमीपगमनं विधीयत इति **प्राञ्चः** । **पितामहचरणास्तु** णिजर्थविवक्षायां मानाभावादार्थकर्तृकं माणवकाधिकारिकमुपनयनमेव विधीयते नोपगमनं ' कृत्विर्यजमानं वाचयति पंचभिः पावयती'त्यत्र यजमानाधिकारिकाध्वर्युकर्तृकवाचनपावनादिवत् । अत एव **छान्दोग्योपनिषदि** गुरुकर्तृकोपनयनानुकूलव्यापाररूपोपगमनकर्तृकता जाबालो मातरमामन्त्र्यात्मानमुपनाययितुं गौतममाजगामेति । **हेमाद्रौ** बुधवचस्यपि " गर्भाष्टमे वर्षे ब्राह्मणमुपनाययेदिति " एतयान्नाद्यकामया । जपेदित्यत्र तु यजमानस्य प्रयोज्याध्वर्य्वादिकर्तृत्वे मानाभावाद्यजेः स्वार्थवण्णिजर्थविशेषणतया यजनमेव विधीयत इत्याहुः । तत्र केचिदुपनयनशब्देनोपनयनमेवाभिधीयत इति । तदयुक्त । उपनयनविषयप्रयोजकव्यापारस्योपनयनशब्दवाच्यत्वाल्लक्षणायां मानाभावादिति **हेमाद्रिः** । तेनाचार्यसमीपनयनांगको गायत्र्युपदेशप्रधान ' गायत्र्या ब्राह्मणमसृजदिति ' **श्रुतौ** गायत्र्या ब्राह्मणमुपनयीतेति । **कात्यायनस्मृतौ** चोपनयनस्य गायत्र्युपदेशाङ्गत्वदर्शनात् । **मेधातिथिनिबंधे** श्रुतिरपि (पृ.९१;पं.१०) "सावित्र्या ब्राह्मणमुपनयीत त्रिष्टुभा राजन्यं जगत्या वैश्यमिति" । सावित्र्यजगायत्री " तत्सवितुर्वरेण्यमिति " त्रिष्टुप् ' आकृष्णेनेति ' जगती " विश्वारूपाणि प्रतिमुंचते कविः । प्रासावीद्भद्रं द्विपदे चतुष्पदे । विनाकमख्यत्सविता वरेण्योनुप्रयाणमुषसो विराजति " । अयमभिप्रायः । गायत्र्याः पादे अष्टौ अक्षराणि सन्ति । तेन ब्राह्मणस्याष्टमे उपनयनम् । त्रिष्टुभः पादे एकादशेति क्षत्रियस्यैकादशे जगत्याः पादे द्वादशेति वैश्यस्य द्वादशे वर्षे उपनयनं ।

एवं चोपनयनपदं योगरूढं समिद्दर्शादिपदस्येयागवाचितोऽप्युपनयनपदस्य तत्संबंधेन प्रधानसंज्ञात्वापत्तेरित्यपास्तं । यथा एकत्ररूढस्यैव योगरूढपदप्रवृत्तेः पकंजपदे । अत्र तु नयने योगस्य गायत्र्युपदेशे च रूढस्य सद्भावे न नैकत्र मावियनं ( ? ) *त्वमिति । स्मृत्युक्तं कालांतरमुक्तं ज्योतिःशास्त्रे " माघादिषु तु मासेषु मौंजी पंचसु शस्यते " । ज्येष्ठमासे ज्येष्ठोपनयनं न कार्यं । तथा च गर्गः

" ज्येष्ठमासे विशेषेण सर्वज्येष्ठस्य चैव हि । उपनीतस्य पुत्रस्य जडत्वं मृत्युरेव वेति " ॥

जन्ममासे न कार्यमित्युक्तं संग्रहे " विवाहे चोपनयने जन्ममासं विवर्जयेत् " ॥ जन्ममासलक्षणमुक्तं वृद्धगर्गेण

" आरभ्य जन्मदिवसं यावत्त्रिंशद्दिनं भवेत् । जन्ममासः स विज्ञेयो गर्हितः सर्वकर्मसु " ॥

एवं चाष्टम्यादितिथिमारभ्याष्टम्यंतो जन्ममासोऽभिमतः । न तु दर्शांतः पूर्णिमांतो वा । विशेषमाह **चंडेश्वरः**

" माघे द्रविणशीलाढ्यः फाल्गुने च दृढव्रतः । चैत्रे भवति मेधावी वैशाखे कोविदो भवेत् ॥

---

१ आपस्तंब धर्मसू० १।१।१९ । * * चिन्हांतर्गतो द्व पाठः । २ एवं मूले ।

" ज्येष्ठे तु ग्रहनीतिश्च आषाढे क्रतुभागभवेत्। मार्गशीर्षे भवेद्भ्रष्ट शेष तु समवाप्नुयात् "॥ आषाढस्तु विष्णुशयनात्प्रागेव न तदूर्ध्वं। तत्र सर्वेषां निषिद्धत्वात्। विशेषमाहुर्वसिष्ठादय " आर्द्रादिके स्वातिविरामकाले नक्षत्रवृन्दे दशके रविश्चेत्। " विवाहचौलव्रतबन्धनाद्य सुरप्रतिष्ठादि न कार्यमेव "॥ " आपूर्यमाणपक्ष " ( १।४।१ ) इति शुक्लआश्वलायनेनोक्तो मुख्य। अनुकल्पमाह बृहस्पति " शुक्लपक्ष शुभ प्रोक्त कृष्णश्चान्त्यत्रिक विनेति "।

अथ गौणकाल गृह्ये ( १।१९।५–७ ) " आ षोडशाद्ब्राह्मणस्यानतीत काल आ द्वाविंशात्क्षत्रियस्य आ चतुर्विंशाद्वैश्यस्यात ऊर्ध्वं पतितसावित्रीका भवति। नैनानुपनयेन्नाध्यापयेन्न याजयेन्नैभिर्व्यवहरेयु "। अत्र व्रात्यताप्रायश्चित्त प्रकम्य

" सावित्रीपतिता यस्य दश वर्षाणि पच च। सशिख वपन कृत्वा व्रत कुर्यात्समाहित"॥ इति यमेन स्पष्ट पचदशवर्षोत्तरप्रायश्चित्ताभिधानात्षोडशा द्वाड् मर्यादोधक। एव पचदशवर्षोत्तरमेव व्रात्यस्तोमादिक जायत इति। यत्तु

" औपनायनिक काल पर षोडशवार्षिक। द्वाविंशति परोऽ यस्य चतुर्विंशतिम पर "॥ इति व्यासवाक्ये सपूर्णषोडशवर्षग्रहणाद्विरोधमुपन्यस्यति। तत्र धर्मप्रकाशे एव व्यवस्थोक्ता। यमवाक्य जन्मप्रभृति पचवर्षातिक्रम प्रायश्चित्तविधिपर। व्यासवाक्य त्वाधानप्रभृति षोडशवर्षातिक्रमे प्रायश्चित्तपरमिति न द्वयोरपि विरोध। ईदृशी च सरणि प्राचां क्वचिदाश्रितैव। यथा

" अष्टादशदिनादर्वागशुचित्व न विद्यते। चतुर्दशदिनादर्वागशुचित्व विधीयत "॥ इतिवाक्ययो पूर्वं रजोदर्शनात्प्रभृत्युत्तर तु स्नानादारभ्येति। याज्ञवल्क्य ( आ ३८ )

" अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहि कृता। सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोरिति "॥ व्रात्यस्तोमो याग। त विनोपनयनेऽधिकारो नास्तीत्यर्थ। स चानुपनीतेनाऽन हिताग्निनाऽविदुषाऽपि अवकीर्णिपशुवत्कार्य। यागोपयुक्तमुपनयनमन्त्या कर्तव्य। तत स्मृत्युक्त प्रायश्चित्त कृत्वा उपनयनमिति।

अथ निषिद्धकाल। रत्नकोशे

" नष्टे चन्द्रेऽस्तगे शुक्रे निरंशे चैव भास्करे। कर्तव्य नोपनयनमनध्याये गलग्रहे "॥ राशिप्रथमांशग सूर्यो निरश। अनध्यायाश्चिरनरेणाग्र वक्ष्याम। गलग्रहास्त्वेव

" त्रयोदशी चतुष्क तु सप्तम्यादिदिनत्रय तथा। चतुर्थ्येकाकिनी प्रोक्ता अष्टावेत गलग्रहा " इति। वक्ष्यमाणानध्यायप्रतिपद्प्रसगमाहतुर्भरद्वाजवसिष्ठौ

" या चैत्रवैशाखसिता तृतीया माघेऽथ सप्तम्यथ फाल्गुनस्य। कृष्णे द्वितीयोपनये प्रशस्ता प्रोक्ता भरद्वाजमुनीन्द्रमुख्यैरिति "। चैत्रवैशाखशुक्लतृतीय मन्वादि युगादी। माघसितसप्तम्यपि मन्वादि। एतासामनध्यायत्व वक्ष्यते।

टोडरानन्दे कारिकाभिरधे विशेष

" अनध्यायाश्च पूर्वेद्युरनध्यायात्परेऽहनि। *व्रतारभ विसर्गं च विद्यारभ न कारयेदिति"॥ अनध्याया परेऽहनीति द्वितीयेतरविषय। *द्वितीयाया सुरेश्वरेण प्रतिपद्वोक्तत्वादि यदि व्याख्या

१ झ विद्वता। २ झ–पातो ध्ययन–। ३ फ–दिनत्रयं। ** झ पुस्तके न पठ्यते। ४ झ–न्ते।

तत्रैव । अत्रानध्यायपदं नित्यानध्यायपरं । न तु नैमित्तिकानध्यायपरं । तेषामनित्यत्वेन नित्यानित्यसंयोगविरोधात् । ननु सप्तम्यादित्रयमिति नवम्या अपि निषेधात्कोऽस्य विषयः । उच्यते । निषेधद्वयवशाद्दोषाधिक्यकल्पनेति केचित् । [3]पितामहचरणास्तु यदा नवमी दशदंडा तदा ' निषेधः कालमात्रक ' इतिवचनात्तदुत्तरमुपनयनं प्राप्तमनेन निषिध्यत इत्याहुः । कालविरोधोपनीतस्य पुनरुपनयनमाह वसिष्ठः " याम्यांशकगते चंद्रे अतिनीचस्थितेऽपि च । अनध्यायेनोपनीतः पुनः संस्कारमर्हति " । "अपरान्हे चोपनीतः पुनः संस्कारमर्हति" इति नारदीये तु तृतीयः पाद उक्तः । अत्रापराह्णस्त्रिधा विभक्तदिनस्यांत्यभागः । तथा ज्योतिर्मनुः

"सर्वदेशेषु पूर्वाण्हे मुख्यं स्यादुपनायनं । मध्यान्हे मध्यमं प्रोक्तमपराह्णे तु गर्हितम्"॥ इति ।

तन्नामानि स्कान्दे

" ऊर्ध्वं सूर्योदयात्प्राक्तं मुहूर्तानां तु पंचकं । पूर्वाह्णः प्रथमः प्रोक्तो मध्यान्हस्तु ततः परम् ॥
" अपराण्हस्ततः प्रोक्तो मुहूर्तानां तु पंचकमिति " ॥

अत्रानध्यायपदं नित्यनैमित्तिको (ऽ) साधारणानध्यायपरं ।

" नैमित्तिकमनध्यायं कृष्णे च प्रतिपद्दिनं । मेखलाबंधने शस्तं चौले वेदव्रतेऽथवेति " ॥

वसिष्ठवचने

" नैमित्तिकानध्यायाः कृष्णप्रतिपदादयः । प्रायश्चित्तनिमित्ते तु मेखलाबंधने मता " इति कालादर्शादिधृतवृद्धगार्ग्यवचनात्प्रायश्चित्तोपनयनपरतैव नापूर्वोपनयनपरता । अनध्यायपदस्य नित्यानध्यायपरत्वे तु नैमित्तिकानध्याय इव प्रतिपद्यपूर्वोपनयनापत्तेः । एतेन पुनःसंस्कारविधिगतानध्यायपदस्य चतुर्दश्यादिनित्यानध्यायपरत्वेनोपयत्तस्य नानित्यानध्यायग्राहकत्वं । अग्नीषोमीयस्योत्कर्षपरतया प्रतीयमाने न पद्दे [ऽ] वादः पौर्णमासं हविरिति वचनेनाग्नीषोमीयपुरोडाश यागस्यैवोत्कर्षो नाग्नीषोमीयो पा ? याजस्यानित्याग्नीषोमीयरहस्यायोगादित्यपास्तं । किंच दृष्ट स एवाग्नीषोमीयपुरोडाशस्यैवोत्कर्षे । नित्याग्नीषोमीयसंबंधो हेतुत्वेन भाव्यतंत्ररत्नशास्त्रदीपिकादि ग्रंथे उक्तः । प्रत्युत तदुत्तरविकल्पसंभवान्नोत्कृष्यते आज्यमित्यादितंत्ररत्नग्रंथस्वरस्यादग्नीषोमीयाज्यस्योत्कर्ष एव प्रतियत इति ।

यत्तु " विद्युत्स्तनयित्नुवृष्टिश्चापत्तौ यत्र संनिपतेयुस्त्र्यहमनध्यायो यावद्भूमिर्व्युदकेत्येके " इति धर्मप्रश्नोदाहृतवाक्येज्यसोवर्षे त्रिरात्रमित्युक्तत्वान्माघादिषु वृष्टेर्नियतत्वान्मासावर्तुरिति त्रैवृष्ट्यै नानध्याय । वृष्टिकालो दक्षिणायन एव उदगयनेप्यपरे इत्यर्थस्य ज्ञापक महाभारते वैराटपर्वणि [अ. ४२] बृहन्नडावस्य पार्थवचनमुत्तमं प्रति "गांडीवमेतत्पार्थस्य लोकेषु विदितं धनुरिति" धनुः प्रकृत्य "एतद्वर्षसहस्रं तु ब्रह्मा पूर्वमधारयत् । ततोऽनंतरमेवाथ प्रजापतिरधारयत् ॥
" त्रीणि पंचशते चैव शक्रोऽशीतिं च पंच च । सोमः पंचशतं राजा तथैव वरुणः शतम् ॥
" पार्थः पंच च षष्टिं च वर्षाणि श्वेतवाहनः " ॥ इति । अत्र खांडवदाहानन्तरं लब्ध

१ ह्ना–नवम्यादि । २ ह्ना–काम्य । ३ ह्ना–मान्धात्‌ । ४ (आपस्तंब १।११।२७–२८) ध. सू. ५ र–शीतीति । ६ र–धसम ।

धनुषः पार्थकर्तृकधारणे पंचषष्ठिवत्सरात्मकवर्षाणां बाधिकत्वात्सार्धद्वात्रिंशद्वत्सराः पंचषष्ठिवर्षशब्देन विवक्षिता इत्यवश्यं वाच्यं । अन्यथातीतानां गतवत्सराभिप्रायव्याख्याने घरावदिति भूतनिर्देशानुपपत्तेरिति त युक्तं पंचषष्ठिवर्षाणीत्यस्योत्तरावधिमात्रसमर्पकत्वात् । प्रयोगा उत्तरावधिसमर्पकान् हि तत्रोत्पत्त्यादिरूपः पूर्वोवधिरपि प्रतीयते येन बाधः स्यात् । किंच दक्षिणायनोत्तरायणयोर्वृष्टीकालत्वे

" अनूराधर्क्षमारभ्य षोडशर्क्षेषु भास्कर । यावच्चरति वै तावद्कालं मुनयो विदुः ॥

" कालदृष्टे तु तत्कालमकाले तु त्रिरात्रकं । अतिमात्राय वा वृष्टिर्नाध्यायीत दिनत्रयं ॥

" तयोस्तु द्विदिनं चैव वृष्टिमात्रे दिनं स्मृतम् " ॥ इति स्मृतिरत्नावल्यादिधृतगार्ग्यवचने । तथा " आर्द्रादि ज्येष्ठांता काला नान्यात्राकालवृष्टिरिति " स्मृत्यर्थसारे अतो वर्षे त्रिरात्रमित्येतस्योपनिषद्भाष्ये स्वार्द्रादिज्येष्ठांतं वर्षर्तुरुक्तस्तत्र वृष्टिकालाकालपरिभाषणवैयर्थ्योपत्तेः । एतदभिप्रायेणैव यस्मिन्देशे यो वर्षाकालस्ततोन्यत्रापर्तुरित्यापस्तंबीयधर्मप्रश्नवाक्यस्य व्याख्यान उज्वलायां प्रथमप्रश्ने तृतीयपटले ( सू. २७ ) हरदत्तीयग्रंथः संगच्छत इति । यत्तु " यावद्भूमिर्व्युदकेत्येके " धर्मप्रश्न ( सू. २८ ) एव पक्षांतरसत्वात्तत्त्रिरात्रानध्यायस्य नित्यत्वमिति । तदप्युक्तं । इदहनि-पत्याटम्याद्यनध्यायेष्वध्यापनेन तथा सकलग्रंथसिद्धनित्यानध्यायत्वं न स्यात् । एतेनापिमनूक्ताकालिका स्यनित्यत्वं ( ऽ ) मनुरब्रवीदित्युक्तिर्विवाल्यार्थेत्यन्य इति मेधातिथिना व्याख्यानादिति परास्तं ।

तथा च पूर्वाण्हादिप्राशस्त्यमाह धर्मप्रकाशे ज्योतिर्मनुः

" सर्वदेशेषु पूर्वाण्हे मुख्य स्यादुपनायनं । मध्यान्हे मध्यमं प्रोक्तमपराण्हे तु गर्हितमिति "॥ भरद्वाजः

" विनर्त्तना वसंतेन कृष्णपक्षे गलग्रहे । अनध्याये चोपनीतः पुनः संस्कारमर्हतीति " ॥

पुनरुपनयनिमित्तानि चाग्रे विस्तरेण वक्ष्यामः । विशेषमाह व्यवहारचंडेश्वरः

" केतोरस्तदिनादूर्ध्वं सप्ताहानि परित्यजेत् । यावत्केतूदयस्तावदश्रद्धः समये भवेदिति "॥

इदं ब्रह्मपुत्राख्योग्रकेतुविषयमिति धर्मप्रकाशे । गर्गः

" चंद्रसूर्योपरागेषु त्र्यहं प्रागशुभं भवेत् । सप्ताहमशुभं पश्चात्स्मृतं ग्रहणशूलकं " ॥

खंडग्रहेऽगिराः

" सर्वग्रासे तु सप्ताहमर्द्धग्रासे दिनत्रयं । त्र्येकांगुलतो ग्रासे दिनमेकं तु वर्जयेदिति " ॥

विवाहचंडेश्वरः " ग्रहे रवींदोरवनिप्रकंपे केतूद्गमोल्कापतनादिदोषे ।

" व्रते दशाहानि वदंति तज्ज्ञास्त्रयोदशाहानि वदंति केचित् "॥

ज्योतिर्निबंधेऽनुकल्पोऽप्युक्तः

" पंचदिनानि वसिष्ठस्त्रिदिनं गर्गस्तु कौशिकस्त्वेकं

" यवनाचार्यस्य मतं पंचमुहूर्तान् दूषयति राहुः " ।

एवं सर्वमालोच्य ज्योतिर्विदुपदिष्टे मुहूर्ते उपनयनं कुर्यात् । अत्र च माणवककर्तृकं गुरुसमीपगमनं प्रधानमिति जरन्मीमांसकाः । नव्यास्तु णिजविवक्षायां मानाभावादाचार्यकर्तृकं माणवकाधिकारिकमुपनयनमेव विधीयत इत्याहुः । युक्तं चेदं । स्मृत्यर्थसारे तु आचार्यसमीपनयनमग्निसमीपनयनं वा गायत्रीवाचनं वा प्रधानमित्युक्तं ।

अथोपनेतृउपनेययोरधिकारसंपादनार्थं प्रायश्चित्तमाह वृद्धविष्णुः " कृच्छत्रयं चोपनेता त्रीन्कृच्छ्रांश्च बटुश्चरेदिति " । आचार्यस्य विशेषः स एवाह

१ ब इ-पूर्वे । २ अ ह ई-वैवाहप्रचंडग्रेट, ए-विवाह । ३ ह-त्रय । ४ फ अर्द्ध-र्ध ।

" सावित्रीमभ्यसेदग्निं पवित्राणि च संस्मरन् । सहस्रं द्वादशाख्यं च सावित्रीं प्रजपेद्बुधः ॥
" स्वाधिकारार्थमेवास्याः प्रदानार्थं हि तत्स्मृतमिति " ॥
षंढादीनामप्युपनयनमुक्तं ब्रह्मांडे " ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः ॥
" तस्माच्च षंढबधिरकुब्जवामनपंगुषु । जडगद्गदरोगार्त्तशुष्कांगविकलांगिषु ॥
" मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिंद्रिये । ध्वस्तपुंस्त्वेषु चैतेषु संस्काराः स्युर्यथोचितमिति" ॥
अशक्यागहीनेनेत्यर्थः ।
" मत्तोन्मत्तौ न संस्कार्याविति केचित्प्रचक्षते । कर्मस्वनाधिकाराच्च पातित्यं नास्ति चैतयोः ॥
" तदपत्यं च संस्कार्यमपरे त्वाहुरन्यथा । संस्कारमंत्रहोमादीन् करोत्याचार्य एव तु ॥
" उपनेयांश्च विधिवदाचार्यस्वसमीपतः । आनीयाग्निसमीपं वा सावित्रीं स्पृश्य वा जपेत् ॥
" कन्यास्वीकरणादन्यत्सर्वं विप्रेण कारयेदिति " ॥

उपनेतृक्रममाह गर्गः

" *पिता पितामहो भ्राता ज्ञातयो गोत्रजाग्रजाः । उपायनेऽधिकारी स्यात्पूर्वाभावे परःपरः* " ॥

*अत्र यद्यपि भ्रातृशब्देन बटोरेव भ्राता प्रतीयते तथापि पितुरेव स ग्राह्यः । तथा च पितामहः
" पितैवोपनयेत्पुत्रं तदभावे पितुः पिता । तदभावे पितुर्भ्राता तदभावे तु सोदर " ॥ इति ।
*ज्ञातयः सपिंडाः। अग्रजाः वयोपेक्षया गोत्रजेषु सपिण्डेषु तद्भिन्नेषु मध्ये ये अग्रजा वृद्धास्त उपनयनाचार्यत्वाधिकारिणः । यस्तु " असंस्कृतासु संस्कार्या मातृभिः पूर्वसंस्कृतैरिति " ( व्य. १२४ ) योगीश्वरवचनेनाग्रजानामधिकारावगमः स तु पितृद्याभावविषयक इति तु युक्तं ।

उक्ताधिकार्यभावे शौनकः

" कुमारस्योपनयनं श्रुताभिजनवृत्तवान् । तपसा धूतनिःशेषपाप्मा कुर्याद्द्विजोत्तमः " ॥ इति
सोऽपि स्वशाखीय एव । तथाचार्यं कुर्यादिति अधिकृत्य व्यासः
" वैदिकानिष्टधर्मज्ञं कुलीनं श्रोत्रियं शुचि । स्वशाखीयमनालस्यं विप्रं कर्तारमीप्सितमिति " ॥

इति कालादिनिर्णयः

अथ परिधानोत्तरीयनिर्णयः । तत्र गृह्यं (आ. १।१९।८–९) "अहतेन वाससा संवीतमैणेयेन वा ब्राह्मणं रौरवेण क्षत्रियमाजेन वैश्यं । यदि वासांसि वसीरन् रक्तानि वसीरन्काषायं ब्राह्मणो मांजिष्ठं क्षत्रियो हारिद्रं वैश्य इति "। अहतलक्षणं प्रचेता आह ।
" ईषद्धौतं नवं श्वेतं सदशं यन्न धारितं । अहतं तद्विजानीयात्सर्वकर्मसु पावनमिति " ॥
पूर्वगृह्यार्थः । तत्र वासः साधारणं । यदा तु न प्रावरणं तदा ब्राम्हणादीनामजिनादीनि । एणी बिंदुसहिता मृगी । एण्या ढञ् । यदि वासांसीत्यत्र वाक्यभेदव्यवहितान्वयौ । वासांसि वसीरन्नित्येकं वाक्यं । यदि रक्तानि वसीरन् तदा काषायमित्यादि वाऽन्यत् ।

मनुर्विशेषमाह ( २।४१ )

"कार्ष्णरौरववास्तानि चर्माणि ब्रह्मचारिणः । वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि चेति " ॥
'कार्ष्णरौरवबास्तान्युत्तरीयाणि कृष्णरुरुबस्तानि नान्युत्तरीणीति' शंखवचनात् । 'बस्तश्छगलका

---

१ हा—स्य । * र पाठः ।

अजे 'त्यमरोक्तेः ( १०।१८५८ ) । वस्त्रेषु विशेषमाह वसिष्ठः ( ११।६४ ) " शुक्लमहतं वासो ब्राह्मणस्य। कार्पासं मांजिष्ठं क्षौमं क्षत्रियस्य। पीतं कौशेयं वैश्यस्येति "॥

इति वस्त्रादिनिर्णयः ॥

मेखलाव्यवस्थामाह मनुः (२।४२)

"मौंजी त्रिवृ समा श्लक्ष्णा कार्या विप्रस्य मेखला। क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतांतवी"॥ ज्या कदाचिच्चर्ममयी भवति कदाचित्तृणमयी। तत्र चर्ममयीव्यावृत्यर्थं मौर्वीति मेधातिथिः। ज्यायाश्च स्वरूपनाशप्रसंगाच्चित्रवृत्त्वादिगुणो नेति धर्मप्रकाशे तातचरणाः। शणे तु त्रिवृत्त्वादिगुणोऽस्त्येव। गृह्ये विशेषः ( आ. गृ. १।१९।१०-११ ) "तेषां मेखला मौंजी ब्राह्मणस्य धनुर्ज्या क्षत्रियस्यावी वैश्यस्येति "। अव्यूर्णकृतेत्यर्थः। अनुकल्पमाह मनुः ( २।४३ ) "मुंजालाभे तु कर्तव्या कुशाश्मंतकबल्वजैः। त्रिवृता ग्रंथिनैकेन त्रिभिः पंचभिरेव चेति "॥ अत्र कुल्लूकभट्टः आदिशब्दस्य लोपमंगीकृत्याकांक्षितविधानान्मुंजादीनां तिसृणां मेखलानामलाभे क्रमेण कुशाश्मंतकबल्वजा ग्राह्या इत्याह। ग्रंथयश्च शिष्टाचारात्प्रवरसंख्यया कार्याः। तथा च मनूक्तो विकल्पो व्यवस्थितः। एकप्रवरस्यैको ग्रंथिस्त्रिप्रवरस्य त्रयः। पंचप्रवरस्य पंचेति। इति मेखलाव्यवस्था॥

दण्डा उक्ता गृह्ये ( आ. गृ. १।१९।१२-१३ ) " तेषां दण्डाः पालाशो ब्राह्मणस्यौदुंबरः क्षत्रियस्य बैल्वो वैश्यस्य। केशसंमितो ब्राह्मणस्य ललाटसंमितः क्षत्रियस्य। प्राणसंमितो वैश्यस्य। सर्वे वा सर्वेषामिति "। प्राणो नासा। मनुर्विशेषमाह ( २।४५ ) " ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ। पैलवौदुंबरौ वैश्यो दंडानर्हन्ति धर्मतः" ॥ इति न चात्र द्वंद्वनिर्देशात्समुच्चय इति वाच्यं।

दंडं प्रदायेति सूत्रे गुणभूतदण्डैकत्वश्रवणात्। मनुस्मृतावेव गुणविधिवाक्ये केशांतको ब्राह्मण·येत्येकवचनश्रवणात्। वसिष्ठस्मृतौ ( स. ११।९२ ) स्पष्टमेव "बैल्वः पालाशो वेति" विकल्पाभिधानाच्च। अतो विकल्पितयोरेव द्वन्द्वनिर्देश इति। सर्वेषामलाभे यम आह " एतेषामप्यलाभे तु सर्वेषां सर्वयज्ञिया " इति।

दंडान्विशिनष्टि श्लोकगौतमः॥

" ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः। अनुद्वेगकरा नृणां सत्वचो नाग्निदूषिताः "।

इति दंडनिर्णयः

यज्ञोपवितमाह मनुः ( २।४४ )

" कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत्। शणसूत्रमयं राज्ञो वैश्यस्याविकसूत्रकम् "॥ शणसूत्रमयमित्यत्रापि ऊर्ध्ववृतं त्रिवृदिति संबध्यते। आविकमव्यूर्णासंभवं। एवं च यदिदानींतनानां क्षत्रियवैश्यानां कार्पासोपवीतधारणं तत्र मूलं न विद्मः। मदनरत्ने कात्यायनवचनं " कार्पासक्षौमगोबालशणवल्कतृणोद्भवं। तदा संभवतो धार्यमुपवीतं द्विजातिभिः" ॥ इति असंभवतः असंभवात्। एवं कार्पासासंभवे कार्यमित्युक्तं भवति। न तु पूर्वोक्तसंभवे इति ज्ञेयं।

१ र-मुंजालाभे इति। २ र-पचवा सप्तवा पुनः। वेदत्रयेण वृतोऽहमिति मन्येत द्विज.। तद्ग्रंथयस्तदगा (प्र) नित दंडस्यापि संस्मरेदिति। ३ ज्ञ-दंडाः।

विशेष उक्तः छंदोगपरिशिष्टे
" त्रिवृदूर्ध्ववृतं कार्यं तंतुत्रयमधोवृतं । त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रंथिरिष्यते " ॥
कर्तव्यतामाह देवलः
" ग्रामान्निष्क्रम्य संख्याय षण्णवत्यंगुलीषु तत् । तावत्त्रिगुणितं सूत्रं प्रक्षाल्याऽब्लिंगकैस्त्रिभिः ॥
"देवागारेऽथवा गोष्ठे नद्यां वाऽन्यत्र वा शुचौ । सावित्र्या त्रिवृतं कुर्यान्नवसूत्रं तु तद्भवेत् ॥
" हरिब्रह्मेश्वरेभ्यश्च प्रणम्यावदधात्यथ । यज्ञोपवीतमित्याद्यैर्व्याहृत्या चापि धारयेत् " ॥
तथा " यज्ञोपवीतं कुर्वीत सूत्राणि नवतंतव " इति । वसिष्ठस्तु विशेषमाह
" नाभेरूर्ध्वमनायुष्यमधो नाभेस्तपःक्षयः । तस्मान्नाभिसमं कुर्यादुपवीतं विचक्षणः " ॥
कात्यायनोऽपि
" पृष्ठदेशे च नाभ्यां च धृतं यद्विंदते कटिम् । तद्धार्यमुपवीतं स्यान्नातिलंबं न चोच्छ्रितमिति" ।
धारणे विशेषमाह भृगुः

" उपवीतं बटोरेकं द्वे तथेतरयोः स्मृते । एकमेव यतीनां स्यादिति शास्त्रस्य निश्चयः"॥
इतरयोर्गृहस्थवनस्थयोः । यतीनां त्रिदंडिनां स्नानोत्तरमेव द्वे इत्याह वसिष्ठः ( १२।१४ )
" स्नातकानां द्वितीयं स्याद्वंतर्वासस्तथोत्तरमिति " एतद्धारणं नित्यं । बहूनि चायुष्कामस्येति देवलवचनाद्बहून्यपि धार्याणि । बहुत्वावधिमाह कश्यपः
" त्रीणि चत्वारि पंचाष्टगृहिणः स्युर्दशापि वा । सर्वैर्वा शुचिभिर्धार्यमुपवीतं द्विजातिभिः " ॥
अत्र त्रिप्रभृति दशपर्यन्तमधिकधारणे फलभूमा कल्प्यः । अनुकल्पमाह देवलः
" कार्पासक्षौमगोबालशाणवल्कतृणादिकं । सदा संभवितं धार्यमुपवीतं द्विजातिभिः " ॥ इदं च
" सदोपवीतिना भाव्यं सदा बद्धशिखेन च । विशिखो व्युपवीतश्च यत्करोति न तत्कृतमिति "
भृगुस्मृतेर्नित्यं । तत्र पूर्वार्द्धेन पुरुषार्थत्वमुत्तरार्द्धेन क्रत्वंगत्वमिति । विशेषमाह मनुः (२।६३) "उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः । सव्ये प्राचीन आवीती निवीती कंठसज्जने" ॥
असमासः छांदसः । स्मृतिसारे सूत्रमन्यकृतमपि ग्राह्यमित्युक्तं ।
"छेदे विनाशे वा स्नातः कन्यया निर्मितं शुभं । विधवाद्यामिरथ वा सूत्र गृण्हीत वै शुचीरिति"॥
मेखलादीनां छेदे जलमध्ये प्रक्षेपः कार्य इत्याह मनुः ( २।६४ )
" मेखलामजिनं दंडमुपवीतं कमंडलुं । अप्सु प्रास्य विनष्टानि गृण्हीतान्यानि मंत्रवदिति " ॥
उपनयनकाले यैर्मंत्रै धृतानि ते मंत्रा गृह्यंते । इत्युपवीतनिर्णयः । इत्युपनयनं ॥

अथ पुनरुपनयने विशेषमाहाश्वलायनः(१।२२।२२–२६) " अथोपेतपूर्वस्य कृताकृतं केशवपनं मेधाजननं चानिरुक्तं परिदानं कालश्च तत्सवितुर्वृणीमह इति सावित्रीमिति" । कृताकृतं वैकल्पिकं । अनिरुक्तं न कर्तव्यमित्यर्थः । कालनियमोऽपि नास्तीत्यर्थः । पराशरः ( १२।३ )
" अजिनं मेखला दंडो भैक्ष्यचर्या व्रतानि च । निवर्तन्ते द्विजातीनां पुनःसंस्कारकर्मणीति " ॥
इदं च पुनरुपनयनं वेदान्तराध्ययनं चिकीर्षुः कुर्यादिति हरदत्तः । आहाश्वलायनः
" अध्वर्यूणां सामगानामृचमध्येतुमिच्छतां । क्रिया स्यात्परिदानांता दीक्षादिने विधीयते " ॥
ऋचं ऋग्वेदं । परिदानमादित्याय व्रतपतये बटुं ते ददामीति विहितं । अन्ये तु यत्र पुनः संस्कारो विधीयते तत्रापीयमेवेतिकर्तव्यतेति ।

---

१ रफडइ–पाठः। २ झ–शून्य । ३ झ–मुनिः । ४ झ–द्विजातिभिः । ५ वा इति झादिपाठः ।

अथ पुनरुपनयननिमित्तानि । भरद्वाज

“ विनतुना वसतेन कृष्णपक्षे गलग्रहे । उपनीतस्त्वनध्याये पुन संस्कारमर्हति ॥ अपराण्ह चोपनीत पुन संस्कारमर्हतीति ” ॥ पराशर ( १२।२ )

“अज्ञानात्प्राश्य विण्मूत्र सुरासमृष्टमत्र च । पुन संस्कारमर्हति त्रयो वर्णा द्विजातय ” ॥ विष्णु “ विड्वराहग्रामकुक्कुटग्रामासमक्षणेषु द्विजातीनां प्रायश्चित्तांते पुन संस्कार कुर्यादिति ” ।

“ लशुन गृजन जग्ध्वा पलाडु च तथा शुन । उष्ट्रमानुषकेमाश्व न् रासभाक्षीरभोजनात् ॥

“ उपायन पुन कुर्यात्तप्तकृच्छ्र चर मुहु ” ॥ दशातर गतस्यौर्ध्वदहिके कृते वयसो पुनरायाति तत्रोक्त स्मृत्

“जीवन् यदि समागच्छेद्घृतकुमे निमज्य त । उद्धृत्य स्थापयित्वाऽस्य जातकर्मादि कारयेदिति”॥

बौधायन सिंधुसौवीरसौराष्ट्रांस्तथा प्रत्यतवासिन । अगवगकलिगांश्च गत्वा सस्कारमर्हति ॥

“ सौराष्ट्रसिंधुसौवीरानावर्त्य दक्षिणापथ । एतान्देशान्द्विजो गत्वा पुन सस्कारमर्हति ”॥ यात्रार्थ गमने तु न दोष ।

“ अगवगकलिंगांश्च सौराष्ट्रमगधास्तथा । तीर्थयात्रा विना गत्वा पुन सस्कारमर्हतीति ” श्लोकगौतमोक्ते । इति पुनरुपनयननिमित्तानि ॥

अथ पुनर्जातकर्मादिनिमित्तानि । पराशर

“ य प्रव्रमिनो विप्र प्रजज्वाला विनिर्गत । अनाशकनिवृत्तश्च गार्हस्थ्याच्च चिकीर्षति ॥

“चरेत्त्रीणि च कृच्छ्राणि त्रीणि चान्द्रायणानि च । जातकर्मादिभि सर्वे सस्कृत शुद्धिमाप्नुयात्”॥ वसिष्ठ (?)–“सत्यस्य दुर्मति कश्चित्परावृत्तिमेदिति । स कुर्यात्कृच्छ्रमश्रात षण्मासात्प्रत्य नतरमिति ” ।

अत्र षण्मासिक विप्रस्य । चान्द्रायणत्रय क्षत्रियस्य । कृच्छ्रत्रय वैश्यस्येति विज्ञानेश्वर । देशांतरगतस्यौर्ध्वदेहिके कृते वयसो पुनरायति तदा विशेषमाह मदनरत्ने वृद्धमनु

‘ जीव यदि स आगच्छेद्घृतकुमे निवश्य च । उन्धृतस्नापयित्वाऽस्य जातकर्मादि कारयेत् ॥

“ द्वादशाऽब्दने कुर्यात्त्रिरात्रमयत्रप्यनु । स्नात्वे द्वहत्ततो भार्यामन्यां वा तदभावत ” ॥ इति ।

अथ ब्रह्मचारिधर्मा ।

याज्ञवल्क्य (आ १२६)“गुरु चैवाप्युपासीत स्वाध्यायार्थ समाहित” इति । आश्वलायन

“ अजनाभ्यजन क्षौद्र गधपुष्पाक्षतान्व्रती । वर्जयेत्पादुके छत्र यान ष्णीषरयादिकान् ॥

“न शयीतान्तरिक्षे तु न शुचौ न परै सह । न वाऽसीत न नग्नश्च नालीक विभृयाद्व्रती ”॥ नालीक नालिकेरकमडलुमिति । धर्मप्रकाशे

“ मनसाऽपि न चोल्लघ्या गुरोराज्ञा कथचन । गुरुवद्गुरुपत्नीषु तत्पुत्रादिषु सर्वदा ॥

“ प्रत्यक्षे वा परोक्षे वा चरेत प्रथमाश्रमी । वेदोदितव्रतैरन्यान्व्रतानन्यांश्च सचरत् ॥

“ न स्नायात्सर्वतीर्थेषु न भुञ्जीयादितस्तत ”॥ तीर्थयात्रां न कुर्यादित्यर्थ ।

“ भैक्ष्यमाहृत्य भुञ्जीयात्सायप्रातर्गुरौ वसन् । देवर्षिपितृपूजां च कुर्याद्वा गुर्वनुज्ञया ॥

“ अच्छिन्नान्धारयेन्नित्य दण्डाजिनकमडलून् । यज्ञसूत्रपवित्रे च मेखलां च गुरौ वसन् ॥

" न शावसूतके स्याता मातापित्रोर्मृतावृते । व्रतिनश्चोत्सवालोक श्राद्धान्न च न शस्यते॥ " न भक्षयेच्च तांबूलमथ मैथुनमेव च । वर्जयेत्क्षुन लाजान्लाजापूपादिकान्व्रती । "चरित्वा चतुरो वेदान्द्वौ चैकमथापि वा । तोषयेद्दक्षिणाभिस्तु गुरुं भक्त्या विचक्षण" इति। सुमन्तु " ब्रह्मचर्यं तपो भैक्ष्य संध्ययोरग्निकर्म च । स्वाध्याय गुरुवृत्तिश्च षर्वेव ब्रह्मचारिणि "॥ व्यास "जघन्यशायी पूर्वं स्यादुत्थायी गुरुवेश्मनीति " । गुरुसेवाया फलमाह शंख " न स्नानेन न होमेन नैवाग्निपरिचर्यया। ब्रह्मचारी दिव याति स याति गुरुपूजनात् "॥ मनु (२।१९८) " नीच शय्यासन चास्य नित्य स्याद्गुरुसन्निधौ। गुरोश्च चक्षुर्विषये न यथेष्टासनो भवेत् " । प्रसारणादिक न कुर्यादित्यर्थ । अत्र नित्यग्रहणाद्ब्रह्मचर्योत्तरकालमप्येतेनुवर्त्तते एव । समासनमप्यनुजानाति क्वचिद्विष्णु " नास्यैकासनो भवेद्दते शिलाफलकनौयानेभ्य " इति । मनु ( २।२०० ) " गुरोर्यत्र परीवादो निंदा वाऽपि प्रवर्तते । कर्णौ तत्र पिधातव्यौ गतव्य वा ततोऽन्यत "॥ सद्दोषकीर्तन परीवाद । असद्दोषोक्तिर्निंदा । निंदादिकरणे फलमाह स एव ( २।२०१ ) " परीवाद्वात्खरो भवति वै भवति निंदक । परिभोक्ता कृमिर्भवति कीटो भवति मत्सरी "॥ परिभोक्ता अदत्तगुरुद्रव्यभोक्ता । हारीत " क्वच वा यदि चार्द्धर्च पाद वा यदि वाऽक्षर । सकाशाद्यस्य गृह्णीयान्नियत तस्य गौरव "॥ मनु ( २।१९९ )

" नोदाहरदस्य नाम परोक्षमपि केवल । न चैवास्यानुकुर्वीत गतिभाषितचेष्टितमिति " । केवल नाम न ग्राह्य किंतु उपाध्यायादिविशिष्ट । उक्त च गौतमेन ( २।२८ ) " नामगोत्रे गुरो समानतो निर्दिशेदिति " । मानेन सहित समान । याज्ञवल्क्य (आ० ३३) " मधुमासाञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनभास्करालोकनाश्लीलपरिवादादि वर्जयेदिति ' ॥ मधु क्षौद्र । आश्वलायनस्मृतौ क्षौद्रग्रहणात् । शुक्त निष्ठुरवाक्य । यदि मासभक्षणाद्विचर्या व्याधिस्तदा गुरोरुच्छिष्ट भक्षणीय । स चैव धीयीत काम गुरोरुच्छिष्ट भेषजार्थं सर्वं प्राश्नीयादिति । आपस्तम्बोपि(१।४।११) " पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्ट भोक्तव्यमिति " । मनु (६।१४) "वर्जयेन्मधुमास च गधमाल्यरसान् स्त्रिय । शुक्तानि चैव सर्वाणि प्राणिनां च विहिंसन ॥ " अभ्यगमजन चाक्ष्णोरुपानच्छत्रधारण । काम क्रोध च लोभ च नर्तन गीतवादन ॥ "द्यूत च जनवाद च परिवाद तथानृतम्" इति।परिवाद बहुजनसवाद । (२।१७८ १०९) "स्त्रीणा च प्रेक्षणालभमुपघात परस्य चेति" । प्रेक्षणालभमितिमैथुनशङ्कायामेवायमोक्त गौतमेन " प्रेक्षणालभने मैथुनशङ्कायामिति " । एव च मान्यस्त्रीणा प्रेक्षणमालभ समाषण वा न दोषाय । आलभ स्पर्श । मनुर्विशेषमाह । (२।२१९) " मुंडो वा जटिलो वा स्यादथ वा स्याच्छिखाजटी " इति । अत्र त्रय पक्षा मुड । जटी । शिखाजटी चेति । गौतमोऽपि (१।२१) " मुंडी शिखी वेति " । कात्यायनोऽपि " सशिख वपन कार्यमास्नानाद्ब्रह्मचारिण " इति । सर्वमुंड व सामगविषयमिति केचित् । तथा च विष्णुपुराणे ज्ञापक " एते लूनशिखास्तत्र वृशनैरचिरोद्गते । कुशकाशाविराजते वत्स सामगा इवेति "

१ इ-नैक—ज्ञ—अव । *वर्जयेन्मधु मास च भौमानि कवकानि च । गृञ्जन शिग्रुन चैव श्लेष्मातकफलनि च । इति मनुस्मृत्या पाठ ।

यमः "खट्टासनं च शयनं वर्जयेद्दंतधावनं । स्वपेदेकः कुशेष्वेव न रेतःस्कंदयेत्क्वचित्" ॥ कूर्मपुराणे "नाऽदर्शे वै समीक्षेत नाचरेद्दंतधावनमिति" ॥ याज्ञवल्क्यः ( आ. ३२ ) "ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि । ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन्निति" ॥ ब्रह्मचर्ये स्थितो ब्राह्मणादिरेकमेकसंबंधि अन्नं नाद्यात् । एकस्यान्नं न गृण्हीयात् । किंतु बहूनां । ब्रह्मचारी तु श्राद्धे निमंत्रितः सन्मधुमांसादिवर्जं एकस्यापि गृहेऽश्नीयात् । अनेन ज्ञायते श्राद्धव्यतिरेकेणैकस्यान्नं न गृण्हीयादिति । तथा ( आ. ३५ ) "अग्निकार्यं ततः कुर्यात्संध्ययोरुभयोरपीति" ततः संध्योत्तरं । संध्याविधिश्चाचारमयूखे विस्तरेण वक्ष्यते । कदाचित्प्रातःसंध्योत्तरमकृतस्याग्निकार्यस्य यावद्भोजनं गौणकालमाह स एव ( आ.३१ ) "कृताग्निकार्यो भुंजीत वाग्यतो गुर्वनुज्ञयेति"। सायमेवाग्निकार्यमित्याहापस्तंबः ( १।४।१७) "सायमेवाग्निपूजेत्येके" इति ॥ समिदाहरणं मनुराह ( २।१८६ ) "दूरादाहृत्य समिधः सन्निदध्याद्विहायसि । सायंप्रातश्च जुहुयात्ताभिरग्निमतंद्रित" ॥ इति विहायसि मंडपादाविति । धर्मप्रकाशे आपस्तंबः "नास्तमिते समिद्धारो गच्छेदिति" । समित्परिमाणमाह कात्यायनः "नांगुष्ठादधिका कार्या समित्स्थूलतया क्वचित् । न वियुक्ता त्वचा चैव न सकीटा न पाटिता ॥ "प्रादेशान्नाधिका नोना तथा न स्याद्विशाखिका । विशीर्णा विदलाह्रस्वा वक्रा ससुषिरा कृशा ॥ "दीर्घाः स्थूलाश्च समिधो वर्जनीयाः प्रयत्नत"। इति । अग्निकार्याकरणे प्रायश्चित्तमृग्विधाने "मानस्तोके जपेन्मंत्रशतसंख्यं शिवालये। अग्निकार्यं विना भुंक्ते न पापं ब्रह्मचारिणः"॥ इति ।

इत्यग्निकार्यं ॥

ततोभिवादनमुक्तं याज्ञवल्क्येन ( आ. २६ ) "ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन्निति" । ततोऽग्निकार्यानतरं । अत्राग्निकार्याभिवादनयोरंगांगित्वाभावात्कदाचिदग्निकार्याकरणेपि अभिवादनं कार्यमेव । वृद्धा मान्याः । तत्र मान्यो गुरुः । तं विशिनष्टि याज्ञवल्क्यः ( आ. ३४ ) "स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छतीति" । क्रिया निषेकाद्याः । मनुरपि ( २।१४२ ) "निषेकादीनि कर्माणि यः करोति यथाविधि । संभावयति चान्नेन स विप्रो गुरुरुच्यते"। इति ।

एवं च पितैव गुरुः । निषेकादिक्रियाकर्तृत्वात्तस्य । एवं चोपनीय य ऋग्वेदमाचार्यः स उदाहृत इति आचार्यस्योपनेतृत्वं पित्रभावे द्रष्टव्यं । यद्यपि क्षत्रियस्य वृत्त्यर्थत्वेनाप्राप्तमध्यापनं तथाप्यापदि धर्मार्थं प्राप्तमेव । अतश्च पितैवोपनयेत्पुत्रमिति क्षत्रियादिष्वप्यापदि प्रवर्तत एव । अयं परं विशेषः । याज्ञवल्क्यवाक्ये संज्ञासंबंधस्त्रैवर्णिकान्विषयीकरोति । मनुवाक्ये तु विप्रग्रहणात्तमेव विषयीकरोति । एवं च विप्रस्यान्नसंभावनाकरणे गुरुत्वं यद्यपि मनुवाक्यं न प्रतिपादयति तथापि याज्ञवल्क्यवचनात्तत्सिद्धिः । क्षत्रियादेरपि वेदाध्ययनाभावे मनुवचनात्तत्सिद्धिः । एवं च त्रैवर्णिकानां मध्ये यस्यैतद्वचनद्वयप्रतिपादितानि निमित्तानि न संति न तस्य गुरुशब्दवाच्यत्वं संभाव्यते । शूद्राणां तु न कदाप्येतद्वचनद्वयप्रतिपादितं गुरुत्वं

१ दूरादिति मनुस्मृतौ पाठः ।

संभाव्यते । नन्वेवं शूद्राणां गुरुतल्पगमनप्रायश्चित्तं न स्यादिति चेत्। यद्यपि गुरुतल्पगमनजन्यं न स्यात्तथापि मातृगमनजन्यं स्यादेवेति न विरोधः । यद्वा

" उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः । मातुलश्च गुरुस्त्राता मातामहपितामहौ ॥

" वर्णज्येष्ठः पितृव्यश्च पुंस्येते गुरवः स्मृताः । माता मातामही गुर्वी पितुर्मातुश्च सोदराः ॥

"पितामही,स्वसा ज्येष्ठा धात्री च गुरवः स्त्रियः" इति देवलवाक्येन केवलस्यापि पितुर्गुरुसंज्ञाकरणात्सद्भार्यागमने भविष्यत्येव गुरुतल्पगमनप्रायश्चित्तं । आचार्यं विशिनष्टि मनुः ( २।१४० )

"उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । संकल्पं सरहस्यं च तमाचार्यं प्रचक्षते" ॥ इति । रहस्यमुपनिषदः । उपाध्यायं विशिनष्टि स एव ( २।१४१ )

" एकदेशं तु यो वेदं वेदांगान्यथ वा पुनः । योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते"॥इति। शंखोऽपि " भृतकाध्यापको यस्तु स उपाध्याय उच्यते " इति । मासे दिने वर्षे वा एतावद्देयमिति परिच्छिद्य योऽध्यापयति स भृतकाध्यापकः । विष्णुरपि " यत्स्वेनं मूल्येनाध्यापयेत्तमुपाध्यायमिति"। विद्यादिति शेषः। एषु च मध्ये माता मान्यतरेत्युक्तं। याज्ञवल्क्येन ( आ. ३५ ) " एते मान्या यथापूर्वमेभ्यो माता गरीयसीति " । धर्मप्रकाशे पुराणे तु

" द्वौ गुरू पुरुषस्येह पिता माता च धर्मतः । तयोरपि पिता श्रेयान्बीजप्राधान्यदर्शनात् ॥

" अभावे बीजिनो माता तदभावे तु पूर्वजः " ॥ इति पितुर्गरीयस्त्वमुक्तं । अत्रेच्छया विकल्पः । तुल्यकल्पत्वं वा । अन्यं विशेषमाह विष्णुः " बाले समानवयस्यध्यापके गुरुवद्वर्तेतेति " । बाल इति नावगणनीय इत्यर्थः ।

इति गुर्वादिनिरूपणं ।

अभिवादनप्रकारमाह मनुः ( २।१२२ )

" अभिवादात्परं विप्रो ज्यायान् समभिवादयन् । असौ नामाहमस्मीति स्वं नाम परिकीर्तयेत् " ॥ अभिवादादभिवादये इति पदात्परं स्वं नाम ग्राह्यं । तथा " भोशब्दं कीर्तयेदंते स्वस्यनाम्नोऽभिवादने " इति । तथा च ' अभिवादये देवदत्तोऽहं भो ' इत्युल्लेखः । एकहस्तेनाभिवादनकरणे दोषमाह विष्णुः

" जन्मप्रभृति यत्किंचिच्चेतसा धर्ममाचरेत् । धर्मं तन्निष्फलं याति एकहस्ताभिवादने " ॥ इति । विशेषमाहात्रिः

" दक्षिणं पाणिमुद्धृत्य प्रकाममभिवादयेत् । श्रोत्रिये त्वंजलिः कार्यः पादोपग्रहणं गुरोरिति " ॥ उपग्रहणं संस्पर्शनं ज्ञेयं । एतस्माच्च वाक्यादेकहस्तेनाप्यभिवादनं गम्यते । एवं च पूर्वोक्तदोषश्रवणं श्रोत्रियादौ ज्ञेयं । पादोपसंग्रहणप्रकारमाह मनुः ( २।७२ )

" व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः । सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः " ॥ गुरुचरण इतिशेषः । बौधायनः ( १।२।२७ ) " श्रोत्रे संस्पृश्येति " विशेषमाह । अन्यविशेषमाह मनुः ( २।२०५ ) " गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेदिति " ॥ अथ प्रत्यभिवादनमुक्तं मनुना ( २।१२५ )

" आयुष्मान्भव सौम्येति वाच्यो विप्रोऽभिवादने । अकारश्चैव नाम्नोंऽते वाच्यः पूर्वाक्षरः प्लुतः"॥ अत्र न नाम्नोंऽतेऽकारो विधीयते । किंतु यो नामांतेऽकारस्तमुद्दिश्य प्लुतमात्रं

१ क-महीपतिः; ङङ-महामुनिः । २ ङङअ-नामांते ।

विधीयते । नाम्नां च सर्वेषामकारांतत्वाभावादकारग्रहणं नामांतस्वरोपलक्षणमिति व्याख्यातृसंप्रदायः । सौम्येति नामग्रहणार्थं । तथा च नामांतस्वरः प्लुतो भवति । शर्मादिप्रयोगोऽपि कार्य इति केचित् । एवं चायुष्मान्भव देवदत्ता ३ शर्मन्निति प्रयोगः । केचित्तु शर्मशब्दांतर्गताकारं प्लुतं पठंति । तच्चिन्त्यं । शर्मशब्दस्य नामांतर्गत्यभावात् । तदंतर्गतौ केवलशर्मप्रयोगाभावादवश्यवक्तव्ये उपपदे द्व्यक्षरं चतुरक्षरं वेति द्व्यक्षरनामानुपपत्तिः ।

इदं च शूद्रस्य न भवति । 'प्रत्यभिवादेऽशूद्रे' इति स्मृतिरूपं पाणिनिसूत्रात् ( ८।२।८३ ) अनेन च ज्ञायते शूद्रं प्रत्यपि प्रत्यभिवादनं प्राप्तमिति ।

ब्राह्मणस्य क्षत्रियादीनामभिवादने प्रायश्चित्तमाह शातातपः

" क्षत्रवैश्यावभिवाद्य प्रायश्चित्तं कथं भवेत् । ब्राह्मणानां दशाष्टौ वा अभिवाद्य विशुद्ध्यति ॥

" अभिवाद्य द्विजः शूद्रं सचैलं स्नानमाचरेत् । ब्राम्हणानां शतं सम्यगभिवाद्य विशुद्ध्यति"॥इति।

अभिवादनापवादमाह विष्णुः

"सभासु चैव सर्वासु यज्ञे राजगृहेषु वा[1]। नमस्कारं प्रकुर्वीत ब्राम्हणान्नाभिवादयेत् " ॥

क्वचिदभिवादमाह शातातपः

" उदक्यां सूतिकां नारीं भर्तृघ्नीं गर्भघातिनीं । अभिवाद्य द्विजो मोहादहोरात्रेण शुद्ध्यति " ॥

अनेन निषेधेन ज्ञायते स्त्रियोऽप्यभिवाद्या इति । यथोक्तं मनुना ( २।१२६ )

" कामं तु गुरुपत्नीनां युवतीनां युवा भुवि । विधिवद्वंदनं कुर्यादसावहमिति ब्रुवन्निति" ॥

विशेष उक्तस्तेनैव

" यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनं । नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः " ॥

एतच्चाभिवादनमधिकवयसामेव कार्यं । "ज्यायांसमभिवादयेदिति" स्मृतेः । अत एव ऋत्विगादीनां मान्यतेऽपि कनीयसामनभिवाद्यत्वमाह गौतमः ( ६।९ ) " ऋत्विक्श्वशुरपितृव्यमातुलानां तु यवीयसां प्रत्युत्थानमनभिवाद्याः[2] " । यत्तु वसिष्ठः ( १३।४१ ) " ऋत्विक्श्वशुरपितृव्यमातुलानवरवयसः प्रत्युत्थायाभिवादयेदिति " तदभिवादनमाभिमुख्येन वंदन परितोषणार्थं । अत एव बौधायन ( १।२।४६ ) " ऋत्विक्श्वशुरमातुलाना तु यवीयसा प्रत्युत्थायाभिभाषणमिति " । अभिभाषणनियममाह मनुः

"कुशलं ब्राह्मणं पृच्छेत्क्षत्रबन्धुमनामयं । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव चेति " ॥ ब्राह्मणेन स्वस्मात्कनिष्ठानां क्षत्रियादीनां वाऽऽशीर्देयेत्युक्तं भविष्यत्पुराणे " ब्राह्मणः सर्ववर्णानां स्वस्ति कुर्यादिति स्थितिरिति " । विशेष उक्तः शातातपेन

" पाखंड पतितं ब्रात्यं महापातकिनं शठं । नास्तिकं च कृतघ्न च नाभिवादेत्कथंचन ॥

" धावंतं च प्रमत्तं च मूत्रोच्चारकृतं तथा । भुंजानमाचमनार्हं नाभिवादेत्कथंच न ॥

" वमंतं जृंभमाणं च कुर्वंतं दंतधावनं । अभ्यक्तशिरसं चैव स्नास्यंतं नाभिवादयेत् " ॥

जमदग्निः

" देवताप्रतिमां दृष्ट्वा यतिं चैव त्रिदंडिनं । नमस्कारं न कुर्याच्चेदहोरात्रेण शुद्ध्यति " ॥

इत्यभिवादनप्रत्यभिवादनिर्णयः ॥

---

१ फ –सह्यासु, डर–उभाभ्र । २ फ–च । ३ अ–वाभि । ४ अडइ–याप्नि, र–याम्नानं । ५ डइअ–नटरवस, र नवरवयस । ६ अरडइ–दतमान ।

अथ मान्यतानिमित्तानि । याज्ञवल्क्यः (आ.११६) "विद्याकर्मवयोबंधुवित्तैर्मान्या यथाक्रमं" ॥ अत्र पूर्वपूर्वस्य गरीयस्त्वं ज्ञेयं। उक्तं च गौतमेन (७१९।२०) " श्रुतं सर्वेभ्यो गरीयस्तन्मूलत्वाद्धर्मस्येति "। मनुरपि ( २।१३७ )

"पंचानां त्रिषु वर्णेषु भूयांसि गुणवंति च । यत्र स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गत"॥इति नवतेरूर्ध्वावस्थां प्राप्त इत्यर्थः । पंचानां विद्यादीनां । याज्ञवल्क्योऽपि ( आ. ११६ ) "एतैः प्रभूतैः शूद्रोऽपि वार्द्धके मानमर्हतीति" ॥ मार्गापसारणे विशेषमाह मनुः ( २।१३८ )

*"चक्रिणो दशमीस्थस्य रोगिणो भारिणः स्त्रियाः । स्नातकस्य च राज्ञश्च पंथा देयो वरस्य च"* ॥ वरो विवाहोद्यतः । भारतेऽपि अष्टावक्रः पथि राज्ञा समेत्य प्रोत्सार्यमाणो वाक्यमिदं बभाषे

" अंधस्य पंथा बधिरस्य पंथाः स्त्रियः पंथा भारवाहस्य पंथाः ।

" राज्ञः पंथा ब्राह्मणेनासमेत्य स्नातस्य पंथा ब्राह्मणस्यैव पंथाः "॥ इति ॥

इति मान्यतानिमित्तं ॥

अथाध्ययनधर्माः । मनुः ( २।१६५ )

" तपोविशेषैर्विविधैर्व्रतैश्च श्रुतिचोदितैः । वेदः कृत्स्नोऽधिगंतव्यः सरहस्यो द्विजन्मनेति " ॥ रहस्यमुपनिषत् । श्रुतौ " तस्मात्स्वाध्यायोऽध्येतव्य " इति । स्वः स्वकीयोऽध्यायः शाखा । तदुक्तं भट्टपादैः अत्र " स्वाध्यायशब्देन स्वशाखैका तु गृह्यते " इति ।

अनेन च स्वाध्यायाध्ययनस्य प्राथम्यमावश्यकं चोक्तं न तु द्वितीयवेदाध्ययनं । एवं च "वेदानधीत्य वेदौ वा वेदं वापि यथाक्रममि"त्यविरुद्धं । अत्र केचित् । बहूनां वेदानामध्ययनेऽपि स्ववेदसंबंधिनी द्वितीया शाखा नाध्येतव्येति व्याचक्षते । यथा आश्वलायनेन शांखायनशाखेति । तदयुक्तं । आश्वलायनेन यजुःशाखाऽध्येतव्या न शांखायनशाखेत्यत्र प्रमाणाभावात् । न च स्वाध्याय इत्यत्रैकवचनात्तस्याध्वरमीमांसारीत्योपादेयगत्वात्पशुनेत्यत्रैव द्वितीयपश्वालंभवत् द्वितीयशाखाऽध्ययनमिति वाच्यं । तत्र हि एकत्वं प्रकृत्य त्वाये व्यावर्तकं संभवति न त्वेवमत्र स्वाध्यायस्यैकत्वेन परिज्ञातत्वात् । न ह्याकाश इत्यत्रैकत्वं व्यावर्तकं भवति । अतो नात्र एक एव स्वाध्यायोऽध्येतव्य इत्यर्थः । किंतु स्वाध्यायोऽध्येतव्य एवेत्यत्यंतायोगव्यावृत्त्या सावधारणो वाक्यार्थः । अत एव वसिष्ठेनोक्तं

"एकवेदस्य शाखानां मध्ये योऽन्यां समाश्रयेत् । स्वशाखां संपरित्यज्य शाखारंडः स उच्यत"॥इति । अन्या स्वशाखाभिन्ना । यत्र हि एकवेदशाखानां मध्ये स्वीयां परित्यज्य योऽन्यामधीते स शाखारंड इति वदता,तामधीत्य अन्यशाखाध्ययनमनुज्ञातं भवति । स एव "अधीत्य शाखामात्मीयां परशाखां ततः पठेदिति "। तथा षडंगो वेदोऽध्येयो ज्ञेयश्चेति । विशेषमाह कात्यायनः "स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः । कर्तुमिच्छति दुर्मेधा मोघं तस्य विचेष्टितमिति " ॥ इदं स्वशाखोक्तविरुद्धं न कार्यमित्येवंपरं । यथोक्तं तेनैव

" यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकं यथेति । "

अध्ययनधर्ममाह मनुः ( २।७५ )

---

१ ह्र–वचोबंध । २ ह्र–चर्या । ३ ह्र–णो । ४ मनु ३।२ । ५ ह्र–माना । ६ ह्र–वसा । ७ ह्र–पशुनात्य । ८ ह्र–ऽन

" प्राक्कूलान्पर्युपासीनः पवित्रैश्चैव पावितः। प्राणायामैस्त्रिभिः पूतस्तत ओंकारमर्हतीति " ॥
प्राक्कूलान्प्रागग्रान्। पवित्रमाह गौतमः ' प्राणोपस्पर्शनं दर्भैरिति '। प्राणा इंद्रियाणि। संवर्त्तः
" प्रणवं प्राक् प्रयुंजीत व्याहृतीस्तदनंतरं। सावित्र्याश्चानुवचनं ततो वृत्तांतमारभेत् " ॥ इति।
वृत्तांतं यत्र स्थापितं। मनुः ( २।८१ )
" ओंकारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः। त्रिपदा चैव गायत्री विज्ञेयं ब्रह्मणो मुखं " ॥
तिस्रः भूर्भुवःस्वः। ब्रह्मणो वेदस्य। मुखं आरंभे पठनीयमित्यर्थः। " ब्राह्मणः प्रणवं कुर्यादा-
दावंते च सर्वदा " इति ( मनु. २।७४ ) वचनादंते प्रणवमात्रं। गौतमः ( २।५५ )
" प्राङ्मुखो दक्षिणतः शिष्य उदङ्मुखो वेति " । मनुः ( २।७० )
" अध्येष्यमाणस्त्वाचांतो यथाशास्त्रमुदङ्मुखः। ब्रह्मांजलिपुटोऽध्याप्यो लघुवासा जितेंद्रिय" ॥ इति।
लृट्प्रयोगेणाचमनमध्ययनागं। शूद्रसन्निधौ नाध्येयमित्याह व्यासः
" अनध्यायेष्वधीतं यच्च शूद्रस्य संनिधौ। प्रतिग्रहनिमित्तं यन्नरकाय तदुच्यत " ॥ इति।
अस्मादध्ययने लब्धिर्भविष्यतीत्याशयाय पठितं। नारदः
" पुस्तकप्रत्ययाधीतं नाधीतं गुरुसन्निधौ। भ्राजते न सभामध्ये जारगर्भ इव स्त्रियाः " ॥
मनुः(४।९९)"नाविस्पष्टमधीयीत न शूद्रजनसन्निधौ।न निशांते परिश्रांतो ब्रह्माधीत्य पुनः स्वपेत्"॥
नारदः "हस्तेनाधीयमानस्तु स्वरवर्णान् प्रयोजयन्। ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते"॥
हस्तस्वराध्ययनं तु सामयजुर्वेदिनां। व्यासः " मेखलाजिनदंडानां धारणैर्ब्रह्मचारिभिः " इति।
" वेदः कृत्स्नोऽधिगन्तव्यः सर्वज्ञानो द्विजातिभिः। भिक्षाशिभिर्गुरोर्नित्यं शुश्रूषायां रतैः सदा ॥
" आसमाप्तेर्व्रतं कार्यं वेदस्य विधिवद्द्विजैः " ॥ इति। शुश्रूषाफलमाह स एव
" यथा खनन् खनित्रेण नरो वार्यधिगच्छति। तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति " ॥
नारदः
" अहेरिव ऋणाद्भीतः सौहित्यान्नरकादिव। राक्षसीभ्य इव स्त्रीभ्यः स विद्यामुपगच्छतीति " ॥
सौहित्यं तृप्तिः। लघुव्यासः
" ऋक्पादमप्यधीयीत मार्गेणोक्तेन धर्मवित्। न त्वेव चतुरो वेदानन्यायेन कदाचन ॥
" वेदविप्लावनात्तेन वरं मौनं समाश्रितं। वेदविप्लावनाद्भीतो नरकं यात्यधोमुख " ॥ इति।
वेदविप्लावस्य लक्षणमाह यमः
" योऽर्थार्थी मां द्विजे दद्यात्पठेच्चैवाविधानतः। अनध्याये च तं प्राहुर्वेदविप्लावकं द्विजाः " ॥
विद्यानाशहेतून्नारद आह
" द्यूतं पुस्तकशुश्रूषा नाटकासक्तिरेव च। स्त्रियस्तंद्री च निद्रा च विद्याविघ्नकराणि षट् " ॥
पुस्तकस्य पुराणादेः शुश्रूषा श्रोतुमिच्छा। अन्यान्यपि लोकतो विद्यानाशकारणान्यवगंतव्यानि।

इत्यध्येतृधर्माः ॥

गुरुधर्मानाह याज्ञवल्क्यः ( आ २८ )
" कृतज्ञाऽद्रोहिमेधाविशुचिकल्यानसूयकाः। अध्याप्या धर्मतः साधु शक्ताप्तज्ञानवित्तदाः " ॥

१ ख–स्थापितं। २ ब्रह्मण. इति मनूक्तपाठः। ३ र–गणात्।

कृतज्ञ उपकारस्य वेत्ता । अद्रोहोऽनपराधी । मेधावी धारणावान् । कल्पो नीरोगः । असूयकः परदोषवक्ता । शक्तः शुश्रूषायां । आप्तोऽप्रतारकः । ज्ञानदो विद्याप्रदः । वित्तदः अर्पणपूर्वमर्थदाता । धर्मप्रकाशे मनुः ( २।१०९ )

"आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः । आप्तः शक्तोऽर्थदः साधुः स्वाध्याप्या दश धर्मतः "॥

तथा ( २।११२ )

" धर्मार्थौ यत्र न स्यातां शुश्रूषा वाऽपि तद्विधा । न तत्र विद्या वक्तव्या शुभं बीजमिवोषरे" ॥

यदा विहितानुष्ठापकाय नास्तिकाय चाध्यापयति तदा धर्माभावः । नारदः

" गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या चतुर्थं नोपलभ्यते " ॥ इति ।

चतुर्थं साधनं । यमः

" सततं प्रातरुत्थाय दंतधावनपूर्वकं । स्नात्वा हुत्वाऽपि शिष्येभ्यः कुर्यादध्यापनं द्विज "॥इति।

आपस्तंबः ( १।३२।३ ) " शयानश्चाध्यापनं वर्जयेदिति " । मनुः ( २।७० )

" अध्येष्यमाणस्तु गुरुर्नित्यकालमतंद्रितः । अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति वा रमेत् "॥

ताडनं तु शिरसि न कार्यं । यथोक्तं मनुना ( ८।३०१ )

"पृष्ठतस्तु शरीरस्य नोत्तमांगे कथंचन । अतोऽन्यथा तु प्रहरन् प्राप्तः स्याद् चोरकिल्बिषम् " ॥

विद्यावतः प्रार्थितस्याऽध्यापनमावश्यकं । "यो हि विद्यामधीत्यार्थिने न प्रदद्यात्[1] स धर्मभाक् स्यादिति " वसिष्ठस्मृतौ श्रवणात् । अधीताया विद्यायाः संपूर्णं फलमाप्नोतीत्यर्थः । एतच्च " अधियीरंस्त्रयो वर्णाः स्वकर्मस्था द्विजातयः । प्रब्रूयाद्ब्राह्मणस्तेषां नेतराविति निश्चय" इति मनु ( १०।१ ) वचनाद्ब्राह्मणेनैव कार्यं । इतरौ राजवैश्यौ । अत्र वाक्यत्रयं । त्रयो वर्णा ब्राह्मणादधीयीरन् । वक्ष्यमाणवचनस्वरसाद्ब्राह्मणादित्यध्याहार्य्यः । ब्राह्मण एव प्रब्रूयादिति द्वितीयं । नेतराविति प्रतिषेधरूपं तृतीयं । एवं यदा क्षत्रियादिरध्यापयति तदा तस्याध्येतुश्च दोषः । आपद्धर्मयोर्दोषो नास्तीत्याह मनुः ( २।२४१ )

"अब्राह्मणादध्ययनमापत्काले विधीयते । अनुव्रज्य तु शुश्रूषा यावदध्ययनं गुरोरिति"॥

अनुव्रज्य शुश्रूषेत्यनुगमनमात्रं कार्यं । न पादप्रक्षालनादि । इयं चापद्ब्राह्मणाध्यापकाभावरूपाऽध्येतुः । गौतमोऽपि [ ७।१–३ ] " आपत्कल्पोऽब्राह्मणाद्ब्राह्मणस्य विद्योपयोगोऽनुगमनं शुश्रूषासमाप्ते ब्राह्मणो गुरुरिति" । मनुरपि ( २।२३८ )

" श्रद्दधानः शुभां विद्यामाददीतावरादपि । अंत्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपीति " ॥

वेदाध्ययनस्य श्रेष्ठत्वमाह याज्ञवल्क्यः ( आ. ४० )

" यज्ञानां तपसश्चैव शुभानां चैव कर्मणां । वेद एव द्विजातीनां निःश्रेयसकरः परः[2] ॥" इति ।

विद्यादानस्य फलमाह स एव ( आ. २१२ )

" सर्वधर्ममयं ब्रह्म प्रदानेभ्योऽधिकं यतः । तद्दत्वा समवाप्नोति ब्रह्मलोकं सनातनमिति ॥ "

इति गुरुधर्माः ॥

---

१ ह्व–चरेत् । २ ह्व–त्युः ।

अथानध्यायाः । ते च नित्यनैमित्तिकभेदेन द्विधा । तत्र नित्यास्तावदुच्यंते । मनुः [ ४।११४ ] "अमावास्या गुरुं हंति शिष्यं हंति चतुर्दशी । ब्रह्माष्टमीपौर्णमास्यौ तस्मात्ताः परिवर्जयेदिति"॥

तथा [ ४।११३ ] "अमावास्याचतुर्दश्योः पौर्णमास्यष्टकासु चेति"। अष्टमीत्वेनाष्टकानामुपादानाद्दोषातिशयार्थं पुनर्ग्रहणं । केचित्तु अष्टमीष्वित्येव पठंति । अहोरात्रं चायमनध्यायः । याज्ञवल्क्येन द्युनिशमित्यनुवृत्तौ चतुर्दश्यादीनामुपादानात् ।

रामायणे हनुमद्वाक्यं

"सा स्वभावेन तन्वंगी त्वद्वियोगाद्विशेषतः । प्रतिपत्पाठशीलस्य विद्येव तनुतां गतेति"॥

हारीतोऽपि

"प्रतिपत्सु चतुर्दश्यामष्टम्यां पर्वणोर्द्वयोः । श्वोऽनध्यायेऽद्यशर्वर्यां नाधीयीत कदाचनेति"॥

तथा "प्रदोषेषु त्रयोदश्यां नाध्येयं प्रतिपत्सुचेति"॥ "त्रिमुहूर्त्तः प्रदोषः स्याद्भानावस्तंगते सती"त्युक्तप्रदोषे । यद्वा प्रदोष उक्तो वृहन्मनुना

"चतुर्थ्यां च त्रयोदश्यां सप्तम्यामर्धरात्रतः । अर्वाक् नाध्ययनं कुर्याद्यदीच्छेत्तस्य धारणं"॥

स्मृत्यर्थसारे विशेषः

"चतुर्थ्याः पूर्वरात्रे तु नवनाडीषु दर्शने । नाध्येयं पूर्वरात्रे स्यात्सप्तमी च त्रयोदशी ॥

"अर्धरात्रात्पुरा चेत्स्यान्नाध्येयं पूर्वरात्रके" इति । पूर्वं चतुर्थ्यामर्द्धरात्रतोऽर्वाक् नाध्येयमिति तावत्पर्यंतं चतुर्थीसत्त्वे । अन्यथा नवनाडीपर्यंतं । यद्वा पूर्ववचनेनार्द्धरात्रात्प्राक् दोषेऽत्रगते पुनरत्र नवनाडीग्रहणं दोषातिशयार्थं । गार्ग्योऽपि "रात्रौ नवसु नाडीषु चतुर्थी यदि दृश्यते "रात्रौ यावद्यावदर्वाक् सप्तमी च त्रयोदशी । प्रदोषः स तु विज्ञेयः सर्वविद्याविगर्हितः"॥ इति ।

दक्षः

"प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् । यामद्वयशयानस्तु ब्रह्मभूयाय कल्पते"॥

*संग्रहेऽपि "महानिशा तु विज्ञेया मध्यमं प्रहरद्वयं । मध्ये द्वियामयो रात्रौ नाधीयीत कदाचन"॥ इति ।

बौधायनः

"प्रातःसंध्या त्रिनाडी स्यात्सायंसंध्या तथाविधा । महानिशा तु विज्ञेया चतस्रो घटिकास्तथा ॥

"सायंप्रातः संध्ययोश्च नाधीयीत महानिशि"। तथा

"महानिशा तु विज्ञेया रात्रौ मध्यमयामयोः । तस्यां स्नानं न कुर्वीत स्वाध्यायं पितृतर्पणमिति"॥ अत्रापि घटिकाचतुष्टयं दोषातिशयार्थं* । स्मृतिचंद्रिकायां पुराणे

"महानवम्यां द्वादश्यां भरण्यां च महासुते । तथाऽक्षयतृतीयायां शिष्यान्नाध्यापयेद् बुधः ॥

"माघमासस्य सप्तम्यां रथाख्यायां विवर्जयेदिति"। महच्छब्दस्य द्वादश्यां भरण्यां च सहान्वय इति धर्मप्रकाशे । महानवमी आश्विनशुक्ला । महाद्वादशी कार्त्तिकशुक्लद्वादशी । महाभरणी प्रौष्ठपद्यनंतरेति तत्रैव । नारदीये

"अयने विषुवे चैव शयने बोधने हरेः । अनध्यायस्तु कर्त्तव्यो मन्वादिषु युगादिषु"॥ तथा

"युगादिषु च सर्वेषु तथा मन्वन्तरादिषु । अनध्यायं प्रकुर्वीत या च सोपपदा तिथिः"॥

१ र–यथा । २ह्र–पाठः । * र–पाठ । ३ अढइ–मध्ये, र–मध्यं । ४ र–बोध्यं, र–पाठ । ५ ह्र–सर्वेषु ।

मन्वंतरादयो युगादयश्च तातचरणकृतश्राद्धमयूखे ज्ञेयाः । सोपदा उक्ताः कालादर्शे "सिता ज्येष्ठे द्वितीया च आश्विने दशमी सिता । चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृता" इति। यदि कदाचिन्नध्यायतिथिः प्रातः सायं वा द्विमुहूर्ता तदाप्यनध्याय इत्याह बौधायनः "यद्यनध्यायतिथिर्द्विमुहूर्ता परिहृश्येत तमनध्यायं प्राहुरिति "। दिनमध्ये परिहृश्येतेत्यर्थः । अत्रापि त्रिमुहूर्ततिथिसत्त्वे सुतरामनध्याय इति सूच्यते । तथा च भविष्ये

" उदयेऽस्तमये वाऽपि मुहूर्तत्रयगामि यत् । तद्दिनं तदहोरात्रमनध्यायविदो विदुः ॥

"केचिदाहुः क्वचिद्देशे या चतुर्दिननाडिकाः । तावदेव त्वनध्यायो न तस्मिंश्च दिनान्तरे"॥इति।

तन्मुहूर्तत्रयगामिदिनं तिथिर्यस्मिन्नहोरात्रे तदहोरात्रमित्यर्थः । दिनांतरे तिथ्यंतरे । " प्रतिपत्क्लेशमात्रेण कलामात्रेण चाष्टमी । दिनं दूषयते सर्वं सुरा गव्यघटं यथेति " वचनं तत्प्राच्याचारमूलकं ज्ञेयं । कालादर्शे स्मृतिः " चातुर्मास्यद्वितीयासु वेदाध्यायं विवर्जये-दिति " । ता आह *गार्ग्यः*

" शुचावूर्जे तपस्ये चै या द्वितीया विधुक्षये । चातुर्मास्यद्वितीयास्ताः प्रवदन्ति मनीषिणः" ॥ इति ।

विधुक्षयः कृष्णपक्षः । आषाढ्युत्तरा कार्तिक्युत्तरा फाल्गुन्युत्तरा चेत्यर्थः ।

इति नित्यानध्यायाः ।

अथ नैमित्तिकेषु तात्कालिकानध्यायानाह याज्ञवल्क्यः [ आ. १४८।१४९।१५०।१५१ ]

" श्वक्रोष्टुगर्दभोलूकसामबाणार्त्तनिस्वने । अमेध्यशवशूद्रांत्यश्मशानपतितांतिके ॥

" देशेऽशुचावात्मनि च विद्युत्स्तनितसंप्लवे । भुक्त्वार्द्रपाणिरंभोंतरर्द्धरात्रेऽतिमारुते ॥

" पांशुवर्षे च दिग्दाहे संध्यानीहारभीतिषु । धावतः पूतिगंधे च शिष्टे च गृहमागते ॥

" खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे । सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्विदुरिति " ॥ बाणो वंशः । शिष्टागमनेऽपि शिष्टाज्ञायां नानध्यायः । यथाह यमः

"स्वगृहं चाऽतिथिं दृष्ट्वा नाधीयीतैव बुद्धिमान् । अथानुज्ञापिते तस्मिन्नध्येतव्यं प्रयत्नत" ॥ इति । यानं रथादि । इरिणमूषरं महाभूमिर्वा । यावन्निमित्तं शब्दादि तावदेवानध्याय इत्यर्थः । मनुः [ ४।१०७ ]

"नित्यानध्याय एव स्याद्ग्रामेषु नगरेषु च । धर्मनैपुण्यकामानां पूतिगंधे च सर्वत" ॥ इति । धर्मस्य नैपुणं संपूर्णत्वं तत्कामयतीति । वसिष्ठो विशेषमाह " नगरेषु कामं गोमयपर्युक्षिते परिलिखिते चेति " । हेमाद्रौ स्मृतौ

" सर्वकुत्सितगंधे च परिस्रातसभासु च । गोविप्ररोधके सर्वराष्ट्रेषु श्राद्धपंक्तिषु ॥

"शाल्मलस्य मधूकस्य कोविदारकपित्थयोः । श्लेष्मातकस्य छायायां चेति तात्कालिकान्विदुः " ॥

श्राद्धपंक्तिषु विहितमंत्रभिन्नेषु श्राद्धभागेष्वनध्यायः । विहितमंत्राः । ' उपहूय ' इत्यादयः । श्राद्धमयूखे वक्ष्यंते । मनुः ( ४।११२ )

"शयान प्रौढपादश्च कृत्वा चैवावसक्थिकां । नाधीयीतामिषं जग्ध्वा सूतकान्नाद्यमेव चेति " ॥

प्रौढपादः प्रसारितपादः । पादारोपितपादो वा । अवसक्थिका जानुनोर्मध्यस्य च बंधः । स एव ( ४।११६-१२१ )

---

१ झ-श्राद्धमयूखे वक्ष्यन्ते । २ अरडइ-च । ३ र-तथा । ४ इट-आ । ५ र-चेति । ६ अ-भिन्नेषु ।

" नाधीयीत श्मशानांते ग्रामांते गोव्रजेऽपि वा । वसित्वा मैथुनं वासः श्राद्धिकं प्रतिगृह्य च ॥
" न विवादे न कलहे न सेनायां न संगरे । न भुक्तमात्रे नाजीर्णे न वमित्वा न सूतके ॥
" शस्त्रेण च क्षते गात्रे रुधिरे च परिस्रुते " ॥ सूतकं सुखोद्गार इति । धर्मप्रकाशे यमः

" सामशब्देनाथर्वजयुषीति" । नाधीयीतेत्यर्थः । आपस्तंबः "शाखांतरध्वनौ साम्नामनध्याय" इति । गौतमः "अभ्रदर्शने चापर्तौ"। अपर्तौप्रावृड्भिन्नर्तौ । हेमाद्रौ स्मृतिः "गजगंडसारससिंहव्याघ्रमहापापिकृतघ्नावेक्षणमनध्याय" इति । एषां यावदेवेक्षणं तावदनध्याय इत्यर्थः । प्रचेताः " चतुष्पथवर्त्ममहापथराजोद्यानेषु नाधीयीतेति " ॥

शंखः ।" नाधीयीताभियुक्तोऽपि यानगो न च नौगतः । देवायतनवल्मीकश्मशानशवसंनिधौ"॥ आपस्तंबः "ब्रह्माध्येष्यमाणो मलवद्वाससेच्छन् संभाषितुं ब्राह्मणेन संभाष्यतया संभाषेत ब्राह्मणेनैव संभाष्याधीयीतेति " । यावद् ब्राह्मणसंभाषणं न कृतं तावदनध्याय इति । गौतमः ( १६।७ ) " बाणभेरीमृदंगगर्दार्तशब्देष्विति " । अनध्याय इत्यर्थः । गर्द शकटं । इति तात्कालिकानध्यायः

सज्योतिरनध्यायमाह मनुः ( ४।१०६ )

"प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिस्वने । सज्योतिः स्यादनध्यायः शेषे रात्रौ यथा दिवा"।

प्रादुष्कृतेष्विति संध्योपलक्षणं । सज्योतिरिति सायंसंध्यायां रात्रौ । पूर्वं विद्युत्स्तनितवर्षाणि प्रक्रांतानि । तत्रोभयोरुक्तं । शेषे वर्षे । यथा दिवा तथा रात्रौ । अहोरात्रमित्यर्थः । वर्षं संध्यायामेव । अयं सज्योतिरनध्यायः प्रावृट्काले । यथाह पैठीनसिः " यदा वर्षास्वेव विद्युत्स्तनितं वा तदा सज्योतिरिति" । अवर्षासु विद्युदादौ त्रिरात्रं वक्ष्यते । इदं सायंसंध्यायां । हारीतेन "प्रातःसंध्यास्तनितेऽहोरात्रमि"त्युक्तत्वात् । स्मृत्यर्थसारे " काकोलूकमूषकुक्कुटमंडूकाद्यंतरागमनं । दिने चेद्दिनांतं रात्रौ चेद्रात्र्यंतमनध्याय " इति । गौतमः " श्मशानग्रामांतमहापथाशौचेष्वनध्याय " इति । इति सज्योतिरनध्यायः ॥

अहोरात्रानध्यायमाह याज्ञवल्क्यः ( आ. १४।४७ )

" संध्यागर्जितनिर्घातभूकंपोल्कानिपातने । समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥
" पशुमंडूकनकुलश्वाहिमार्जारमूषकैः । कृतेंतरे त्वहोरात्रं शक्रपाते तथोच्छ्रये " ॥

अहोरात्रानुवृत्तौ वसिष्ठः ( १३।१६ ) "फलान्यापस्तिलान्भक्षान्यच्चान्यच्छ्राद्धिकं भवेत् । प्रतिगृह्याप्यनध्याय " इति । श्राद्धिकं पार्वणसंबंधि । एकोद्दिष्टे वक्ष्यते । नवश्राद्धेऽन्नजरणपर्यंतमनध्यायः । शातातपः " अष्टकासु त्वहोरात्रमुल्कासु च महोत्सवे " इति । गौतमः ( १६।३४ ) "संकुलोपाहितेवेदसमाप्तिछर्दिश्राद्धमनुष्ययज्ञभोजनेष्वहोरात्रामिति"। संकुलोपाहितोऽग्न्युत्पातः। छर्दौ विशेषमाहापस्तंबः (१।१०।२२–२३) "छर्दयित्वा स्वप्नांते घृतं वा प्राश्येति"। अधीयीतेत्यर्थः । स्वप्नांतं मोहनादि । धर्मप्रकाशे । अहोरात्रानुवृत्तौ गोभिलः " सब्रह्मचारिणि मृते प्रेते भूमिपतावपीति " । अनध्याय इत्यर्थः । गौतमः ( १७।४३–४४ ) "ऊर्ध्वं भोजनादुत्सवे प्राधीनस्येति । अस्यार्थः । उत्सवे विवाहादावूर्ध्वं भोजनादहोरात्रमनध्यायः ।

---

१ डइअ–आपर्तौ (१६।८) २ डइफ—मूषक। ३ र तथा क्षये। ४ अडइर–संकलो, ह्र ?-सफलो। ५ रअडइ–मादेपादिति। ६ ह्र प्राधानस्येति।

धीनस्य प्रथमाध्ययने । अनुत्सवेऽपि भोजनादूर्ध्वमनध्याय इति । इत्यहोरात्रानध्यायाः ॥

आकालिकानध्यायमाह मनुः ( ४।१०३ )

" विद्युत्स्तनितवर्षेषु महोल्कानां च संप्लवे । आकालिकमनध्यायमेतेषु मनुरब्रवीदिति "॥ विद्युदादित्रयसाहित्यमत्र ज्ञेयं । द्वंद्वनिर्देशादिति मेधातिथिः । प्रत्येकं निमित्ततेति हेमाद्रिः । इदं च वर्षाकाले तद्भिन्ने वक्ष्यते । यस्मिन् समये निमित्तं जातं तं कालमारभ्य श्वस्तावत्कालपर्यंतं विद्युदादीनां निमित्तत्वं संध्यायामेव । यथाह स एव

' एतांस्त्वभ्युदितान्विद्याद्यदा प्रादुष्कृताग्निषु । तदा विद्यादनध्यायमनृतौ चाभ्रदर्शने "॥

एवं च ऋतावभ्रदर्शने नानध्यायः । अभ्रदर्शनेऽपि प्रादुष्कृतान्वय इति धर्मप्रकाशे । आपस्तंबः (१।३।११।३०) "उल्कापातमग्न्युत्पातं च सर्वासां विद्यानामाकालिकमिति"। अनध्याय इत्यर्थः । हेमाद्रौ स्मृत्यंतरे " अग्न्युत्पाते चाकालवृष्टौ चाकालिकोऽनध्याय " इति । अग्न्युत्पातश्च समानग्रामभवः आपस्तंबः (१।११।२५।२९) "विद्युत्स्तनयित्नुवृष्टयोऽपर्तौ यत्र संनिपतेयुस्त्र्यहमनध्यायो । यावद्भूमिर्व्युदकेत्येके । एकेन द्वाभ्यां चैतेषामाकालमिति ।" अपर्तुमाह गार्ग्यः

" अनुराधर्क्षमारभ्य षोडशर्क्षेषु भास्करः । यावत्प्रवर्तते तावदृकालं मुनयो विदुरिति "॥ एवं च मृगमारभ्य विशाखांतं कालः ।

इत्याकालिकानध्यायः ॥

पक्षिण्यनध्यायमाह मनुः ( ४।९७ )

" यथाशास्त्रं तु कृत्वैवमुत्सर्गं छंदसां बहिः । विरमेत्पक्षिणीं रात्रिं यद्वाऽप्येकमहर्निशमिति"॥

कालादर्शे मनुः

" उत्सर्गे प्रथमेऽध्याये त्वनध्यायस्त्र्यहं भवेत् । पारणाध्ययनादौ तु पक्षिणीं दिनमेव चेति"॥

इति पक्षिण्यनध्यायः ॥

त्रिदिनानध्यायमाह मनुः ( ४।११० )

" प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनं । त्र्यहं न कीर्तयेद् ब्रह्म राज्ञो राहोश्च सूतक"॥ इति । अत्र केचिन्नवश्राद्धेऽन्नजरणपर्यंतमनध्याय एकोद्दिष्टे तु त्र्यहमित्यनौचित्यं मन्वाना नवश्राद्धीयामतिपूर्वान्नभोजनेऽन्नजरणपर्यंतमेकोद्दिष्टेषु मतिपूर्वं त्र्यहमिति व्यवस्थापयंति । मनूक्तैकोद्दिष्टशब्देन च नवश्राद्धान्यपि गृह्यंते । शंखः " राहुदर्शने शक्रध्वजपतने आचार्ये च मृते त्रिरात्रमिति "। इदं च संपूर्णग्रहे । खंडग्रहे तु गौतमोक्तमाकालिकमनध्यायं विद्यादिति तत्रैव । विज्ञानेश्वरस्तु ग्रस्तास्ते त्रिरात्रमन्यथाऽकालिकमित्याह । शक्रध्वजकालमाह गार्ग्यः

" द्वादश्यां तु सिते पक्षे मासि प्रौष्ठपदे तथा । शक्रमुत्थापयेद्राजा विश्वश्रवणवासवैः "॥ विश्वं वैश्वदेवमुत्तराषाढा । वासवं धनिष्ठा । शक्रध्वजपातकालोऽपि पुराणे–" मासि भाद्रपदे राजन् शक्रयष्टिनिपातनमिति " । पौर्णमास्यामिति केचित् । मनुः ( ४।११९ ) " उपाकर्मणि चोत्सर्गे त्रिरात्रक्षपणं स्मृतमिति " । याज्ञवल्क्यः (आ. १४४) " त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबंधुषु "। विश्वामित्रः " समाप्य वेदं त्रिदिनं वेदानध्ययनं भवेदिति"।

---

१ वृष्टयापर्तौ इति मुद्रित पाठः । २ अ इ र—आर्द्रा । ३ द—वैः; अ र—वे । ४ फ—वैष्णवं ।

हारीतः "आरण्यशूकरस्य त्र्यहं ग्राम्यस्याहारिति" । अंतरागमन इत्यर्थः । इति त्र्यहानध्यायाः । महागुरुनिपाते ब्राह्मणस्य द्वादशरात्रमध्ययनादिनिषेधात्सोऽप्यनध्यायः । त्रिमासानध्याय उक्तो हेमाद्रौ "अविगवयाजव्याघ्रनारितकादौ त्रिमासमिति"।षण्मासानध्याय उक्तः श्लोकगौतमेन।

"गुर्वंतेवासिनां वेदमध्येतॄणां च मध्यतः । ययुः शशाः श्वपाकाऽजा नाधीयीतार्द्धवत्सरमिति"॥ पूर्वमजे मासत्रयमुक्तं । अतोऽत्र प्रथमारंभेऽजगमने षण्मासं ज्ञेयं । संवत्सरानध्याय उक्तो वसिष्ठेन "यदि हस्ती संवत्सरं व्याघ्रश्चैव तथेति" । अत्र व्यामविषयेऽपि प्रथमारंभो ग्राह्यः,। इत्यनध्यायनिर्णयः । अनध्यायापवादमाह मनुः ( २।१०० )

"वेदोपाकरणे चैव स्वाध्याये चैव नैत्यके । नानुरोधोऽस्त्यनध्याये होममंत्रेषु चैव हीति" ॥

नित्यस्वाध्यायो ब्रह्मयज्ञः । शौनकः

"नित्ये जपे च काम्ये च वेदपारायणे तथा । नानध्यायोऽस्ति वेदानां ग्रहणे ग्राहणे स्मृतः" ॥ तथा "देवतार्चनमंत्राणां नानध्यायः स्मृतस्तथा । नानध्याये जपेद्वेदान् रुद्रांश्चैव विशेषतः ॥ "पौरुषं पावमानं च गृहीतनियमादृते" इति । यदि मयेदमपठित्वा न भोक्तव्यमिति नियमस्तदाऽध्येयमित्यर्थः ।

तथा "चतुर्दश्यष्टमी पर्व प्रतिपत्स्वेव सर्वदा । दुर्मेधसामनध्यायस्त्वंतरागमनेषु च" ॥

"तत्र विस्मृतिशीलानां बहुवेदपपाठिनां । चतुर्दश्यष्टमीपर्वप्रतिपद्वर्जितेषु च ॥

"वेदांगन्यायमीमांसाधर्मशास्त्राणि चाभ्यसेदिति" । पठितं ।

इत्यपवादाः ॥

भिक्षाप्रकारमाह मनुः ( २।४८–४९ )

"प्रतिगृह्येप्सितं दंडमुपस्थाय च भास्करं । प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि ॥

"भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः । भवन्मध्यं तु राजन्यो वैश्यस्तु भवदंतिमः ॥

"वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु । ब्रह्मचार्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहमिति" ॥

भवत्पूर्वमिति 'भवती भिक्षां ददातु' 'भिक्षां भवती ददातु' 'भिक्षां ददातु भवतीति' । व्यासः "ब्राह्मणक्षत्रियविशश्चरेयुर्भैक्षमन्वहं । सजातीयगृहेष्वेव सार्ववर्णिकमेव वेति" । शूद्रादामं ग्राह्यं न तु पक्वं "तस्मादामं गृहीतव्यं शूद्रादप्यंगिराऽब्रवीद्" त्यंगिरःस्मृतेः ।

"यस्तु वेदमधीयानः शूद्रान्नमुपजीवति । शूद्रो वेदफलं याति शूद्रत्वं चाधिगच्छतीति" पराशरेण सिद्धान्नस्य निंदितत्वाच्च । एतच्चापद्विषयं । "चातुर्वर्ण्यं चरेद्भैक्षमलाभे कुरुनंदनेति" भविष्यत्पुराणोक्तेः । मनुरपि ( २।१८५ )

"सर्वं वाऽपि चरेद्ग्रामं पूर्वोक्तानामसंभवे । नियम्य प्रयतो वाचमभिशस्तांश्च वर्जयेदिति" ॥ अभिशस्तवर्जनेनैव पतितवर्जनं सुतरां सिद्धं ।

विशेषमाह मनुः ( २।५० ) "गुरोः कुले न भिक्षेत न ज्ञातिकुलबंधुषु" । यत्तु "मातरं वा स्वसारं वा मातुर्वा भगिनीं निजां । भिक्षेत भिक्षां प्रथमं या चैनं न निवारयेदिति"॥ तथा "अप्रत्याख्यायिनमग्रे भिक्षेताप्रत्याख्यायिनीं वेति" (आश्व.गृ.सू. १।२२।७ ) तदुपनयनांग–

भिक्षापरमिति न विरोधः । एतच्च सायंप्रातः कार्यं । "सायं प्रातरमंत्रेण भिक्षां चरेदि "त्याप-स्तंबोक्तेः(१।३।२५)'। अमंत्रे विशेषमाह हारीतः "लौहे मृन्मये वा पात्रे भुंजीतेति"। विशेषमाह मनुः । ( २।१८८ ) " भैक्षेण वर्तयेन्नित्यं नैकान्नाशी भवेद् व्रतीति "।

यमः "आहारमात्रादधिकं न क्वचिद्भैक्षमाहरेत् । युज्यते स्तेयदोषेण कामतोऽधिकमाहरन्निति"॥ कामत इत्युक्त्याऽज्ञानादधिकाहरणे न दोषः । अज्ञानादधिकाहरणे आपस्तंबः( १।३।३७–३९) "न चोच्छिष्टं कुर्यादशक्तौ भूमौ निखनेदप्सु वा प्रवेशयेदिति" । गुरवे निवेद्यमित्याह मनुः(२।५१) " समाहृत्य तु तद्भैक्षं यावदर्थममायया । निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिरिति " ॥ अमायया गुरुर्ग्रहीष्यतीति भिया स्वादु न गोपनीयमित्यर्थः । याज्ञवल्क्यः ( आ०.३१ )

"कृताग्निकार्यो भुंजीत वाग्यतो गुर्वनुज्ञया । अपोशनक्रियापूर्वं सत्कृत्यान्नमकुत्सयन्निति "॥

गुरोरसन्निधौ तत्पुत्रादिभ्योऽनुज्ञा ग्राह्या । " असन्निधौ तद्भार्यापुत्रसब्रह्मचारिसद्भ्य " इति ( ३।४६ ) गौतमस्मरणात् । आपस्तंबः ( १।१।३६ ) " भुक्त्वा स्वयममत्रं प्रक्षालयेदिति " तच्च भोजनमपरिमितमित्याह वसिष्ठः ( ६।२० ) "अष्टौ ग्रासा मुनेर्भैक्ष्यं वानप्रस्थस्य षोडश । द्वात्रिंशत्तु गृहस्थस्यापरिमितं ब्रह्मचारिण " ॥ इति । आपस्तंबः (२।१०।१३)

"आहिताग्निरनड्वांश्च ब्रह्मचारीति ते त्रयः । अश्नंत एव सिध्यंति नैषां सिद्धिरनश्नतामिति"॥

आहिताग्नेर्बर्हिःसमिदाहरणादेरवश्यकर्तव्यत्वाद् ब्रह्मचारिणश्च गुरुसेवाया अवश्यकर्तव्यत्वात्त-द्विरोधिशरीरनैर्बल्यापादकं काम्यव्रतादिनानुष्ठानार्हमित्यर्थः। अनडुद्ग्रहणं दृष्टान्तार्थं। इति भिक्षाटनं।

ब्रह्मचर्यविधिमाह याज्ञवल्क्यः ( आ० ३६ )

" प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पंच वा । ग्रहणांतिकमित्येक " इति । यावद्ग्रहणं स्वाधीनो-च्चारणक्षमत्वं तावद्वा । यमः

"वसेद् द्वादशवर्षाणि चतुर्विंशतिमेव वा । षट्त्रिंशतं वा वर्षाणि प्रतिवेदव्रतं चरेदिति" ॥

यस्तु चतुरो वेदानध्येतुमिच्छति तस्याष्टाचत्वारिंशद्वर्षाणि । यथाहापस्तबः ( १।२।११–१२ ) " उपेतस्याचार्यकुले ब्रह्मचारिण्यष्टाचत्वारिंशद्वत्सरानिति " । अत्र च पक्षविकल्पे अध्ययनकाल एव वैकल्पिकानामावृत्तोऽवधारणमितिन्यायेनैकः पक्षः परिग्रहीतव्यः । तस्मिंश्च द्वादशवर्षपक्षादौ परिगृहीते मध्ये गृहीतेऽपि वेदे कालः पूरयितव्य इति सेधातिथिः । इति ब्रह्मचर्यावधिः

द्विविधो ब्रह्मचारी उपकुर्वाणो नैष्ठिकश्च । तत्र नैष्ठिकस्य विशेष उक्तो याज्ञवल्क्येन (आ०४९).

" नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ । तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वेति"॥

वसिष्ठः ( ७।७।१७ ) "संयतवाक्चतुर्थषष्ठाष्टमकालभोजी भैक्षाशी । गुर्वधीनो जटिलः शिखाजटो वा । गुरुं गच्छन्तमनुगच्छेदासीनमन्वासीतोत्तिष्ठंतमनुतिष्ठन्शयानमुपासीताहूताध्यायी । सर्वं लब्धं निवेद्य तदनुज्ञया भुञ्जीत । न खट्वाशयनदंतप्रक्षालनांजनाभ्यंजनवर्जास्थानासनशील-स्त्रिरह्नोऽभ्युपेयादप" । इति । त्रिकालं स्नायादित्यर्थः । केवलेन तु सकृदवगाहनं सकृद्भोजन-मुक्तं तदशक्तपरं । केषांचिन्नैष्ठिकब्रह्मचर्यमेवेत्याह विष्णुः

१ छइर–लौहे । २–फ–यथेष्टं ब्रह्मचारिवासः इत्यास्तंबीयपाठः ३ आपस्तंबध. सू. २।१०।१३ ४ झ–णिको, ५ झ–णको ।

"कुब्जवामनजात्यंधक्लीबपंगवार्त्तरोगिणां। व्रतचर्या भवेत्तेषां यावज्जीवमनंशत" ॥इति। अत्रानंशत इति हेतुं वदता दृष्टमूलत्वमुक्तं। अतः प्रतिग्रहादिना द्रव्यसद्भावे भवत्येव विवाहः। दृष्टं च धृतराष्ट्रे। संग्रहेऽपि

"पंग्वादीनामनंशत्वादसामर्थ्याच्च शाश्वतः। नियतं नैष्ठिकत्वं स्यात्कर्मस्वनधिकारत" ॥ इति। न चैवं सर्वं नैष्ठिकविधीनां कुब्जादिपरत्वेनोपसंहारादन्येषामनधिकार इति वाच्यं।

"यदि त्वात्यंतिको वासो रोचेतास्य गुरोः कुले। युक्तः परिचरेदेनमाशरीरविमोक्षणादिति" मनुप्रतिपादितपाक्षिकत्वविरोधात् कुब्जादीनां नित्यप्राप्तेः। न च ब्रह्मचारिद्वैविध्य- 'चत्वार आश्रमा' इति आपस्तंबवचनविरोधः। "द्वितीयो नैष्ठिकश्चैव तस्मिन्नेवाश्रमे स्थित" इति दक्षिणैकाश्रमत्वोक्तेः। अस्य फलमाह याज्ञवल्क्यः ( आ० ५० )

"अनेन विधिना देहं साधयन् विजितेंद्रियः। ब्रह्मलोकमवाप्नोति न चेहा जायते पुनरिति" ॥ इदं च फलं ब्रह्मविद्विषयमब्रह्मविदस्तु ब्रह्मलोकमात्रं। "तमेवं विदित्वाऽतिमृत्युमेति। नान्यः पन्था विद्यतेऽयनाय" इति ज्ञानस्यैव मोक्षसाधनत्वोक्तमिति। इति नैष्ठिकब्रह्मचर्यविधिः। व्रतान्युक्तान्याश्वलायनस्मृतौ

"प्रथमं स्यान्महानाम्नी द्वितीयं स्यान्महाव्रतं। तृतीयं स्यादुपनिषद्गोदानाख्यं ततः परमिति"॥ स्मृत्यादौ गोदानस्यैव केशांत इति संज्ञा। तत्कालमाह मनुः ( २।६५ )

"केशांतः षोडशे वर्षे ब्राह्मणस्य विधीयते। राजन्यबंधोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः" ॥ इति। द्व्यधिके चतुर्विंशे इत्यर्थः। एवं च व्रताना वर्षव्यवधानेनानुष्ठेयत्वाद्ब्राह्मणस्य त्रयोदश- वर्षादारभ्य व्रतानि भवंति। राजन्यस्योनविंशवर्षादारभ्य वैश्यस्यैकविंशादारभ्येति। एषु च व्रतेषु चौलवत्कालनिर्णयः। तदुक्तं श्रीधरीये

"तिथिनक्षत्रवारांशवर्गोदयनिरीक्षणं। चौलवत्सर्वमाख्यातं सगोदानव्रतेषु चेति" ॥ तैत्तिरीयाणां नामभेदः प्राजापत्यं सौम्यमाग्नेयं वैश्वदेवमिति। तेषु च व्रतेषु दडादीनाह पराशरः "व्रतस्य विहितं कर्म यत्सूत्रं या च मेखला। यो दंडो यच्च वसनं तत्तदस्य व्रतेष्वपीति," ॥ स्वकाले व्रतलोपे प्रायश्चित्तमाहात्रिः "पिता भ्राता परो वाऽपि प्राजापत्यत्रयं चरेदिति"। अशक्तौ पित्रादीनामनुष्ठानं। शक्तौ तु तेनैव कार्यम्। यथाह शौनकः

"प्रत्येकं कृच्छ्रमेकैकं चरित्वाज्याहुतीः शतं हुत्वा चैव तु गायत्र्या स्नायादित्याह शौनक" ॥ इति। अत्र प्रायश्चित्ते स्नानसमानकर्तृकत्वश्रवणाद्वटोरेव कर्तृत्वं प्रायश्चित्तोत्तरकालमेतानि समावर्तनेन सह कर्त्तव्यानीति प्रयोगपारिजाते। तत्र मूलं मृग्यं। इति व्रतलोपप्रायश्चित्तं ॥ अथाश्रमाविकल्पसमुच्चयौ। समुच्चयस्तावदादित्यपुराणे

"ब्रम्हचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः। अप्रमत्तेन मनसा मा गाः पुत्रक वर्त्मनि"। मनुरपि ( ६।८७ )

"ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः। एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः ॥

"सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रं निषेविताः। यथोक्तकारिणं विप्रं नयंति परमां गतिमिति"।

---

१ ह्म-वसतोऽस्य। २ अ, २ श्लो १४२ ३ र-व। अदृगपाठ

गृहस्थप्रभवा गृहस्थोपजीविनः । अध्वस्तनवनादीनां गृहस्थानामपि गृहस्थोपजीवित्वाच्चतुर्णां ग्रहणं । क्रमश इति प्रातिलोम्यं नाभिहं । तथा च दक्षः

" त्रयाणामानुलोम्यं स्यात्प्रातिलोम्यं न विद्यते । प्रातिलोम्येन यो याति न तस्मात्पापकृन्नरः"॥

त्रयाणामिति ब्रह्मचर्योत्तरेषां ग्रहणं । तस्यावश्यकत्वादित्यर्थः । मनुर्विशेषमाह ( ४।१ )

" चतुर्थमायुषो भागं वसित्वाऽद्यं गुरोः कुले । द्वितीयमायुषो भागं कृतदारो गृहे वसेत् ॥

" वनेषु च विहृत्यैवं तृतीयं भागमायुषः । चतुर्थमायुषो भागं त्यक्त्वा संगान्परिव्रजेदिति " ॥

अत्र " शतायुर्वै पुरुष इति" श्रुतेः पंचविंशतिवर्षपर्यंतमेकैकस्मिन्नाश्रमेऽवस्थातव्यमिति निबंधकृतः । एवं क्रमे स्थिते यदापस्तंबेनोक्तं ( २।२१।१ ) " चत्वार आश्रमा गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थमिति " तत्रोद्देशमात्रे तात्पर्यं न क्रमे । आश्रमसमुच्चयस्य फलमाह हारीतः " अनेन विधिना यो हि आश्रमानुपसेवते । स सर्वलोकान्निर्जित्य ब्रह्मलोकाय कल्पत "॥ इति । विकल्प उक्तो जाबालश्रुतौ " यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वेति "॥

भविष्यत्पुराणेऽपि

"गार्हस्थ्यमिच्छन् भूपाल कुर्याद्दारपरिग्रहं । ब्रह्मचर्येण वा कालं नयेत्संकल्पपूर्वकं ॥

" वैखानसो वाऽपि भवेत्परिव्राडथ वेच्छयेति " । वसिष्ठेन गार्हस्थ्यस्य स्तुतिरुक्ता

" गृहस्थ एव प्रव्रजेद्गृहस्थः स्तूयते यतः । चतुर्णामाश्रमाणां तु गृहस्थस्तु विशिष्यते ॥

" सर्वेषामपि चैतेषां वेदस्मृतिविधानतः । गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान्बिभर्त्ति हीति " ॥

ततश्चैवमुक्तं । प्रथमं ब्रह्मचर्यमावश्यकं । ततो यदि तत्रैव रुचिस्ततो ब्रह्मचर्येणैवाजीवं तिष्ठेत् । यदि न रुचिस्ततो गृही वनी यती वा भवेदिति । ततो गार्हस्थ्येनैवायुः क्षपयेत् । वनाश्रमेण वा यत्याश्रमेण चेति । तच्चाश्रमचतुष्टयं विप्रादिवर्णत्रयस्य । " त्रयाणां वर्णानां चत्वार आश्रमाः" इति कठसूत्रात् । एवं "एष वोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विध" इति (६।९७)मनुवाक्ये ब्राह्मणग्रहणं द्विजोपलक्षणमिति धर्मप्रकाशे पितामहचरणाः । श्रुतिस्तेषु सर्वेषु ब्राह्मणो निर्वेदमायादित्यादिसंन्यासविधिषु ब्राह्मणग्रहणात्तस्य च स्मृत्यनुरोधेनोपलक्षणत्वे प्रमाणाभावात्प्रत्यक्षश्रुतिविरुद्धा काचित्स्मृतिरप्रमाणं । " जोधनीभिः पत्नी संयाजयंतीति "वत् । अथवा क्षत्रियादीनां संन्यासश्रवणं विद्वत्सन्यासपरमिति शंकराचार्यादीनामाशयः । इत्याश्रमविकल्पसमुच्चयौ ।

स्नानमाह याज्ञवल्क्यः

" गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया । वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वेति " ॥

वरं गुरुसंतोषकारिणीं दक्षिणां । संग्रहकारो विशेषमाह

"आहरिष्यामि किं तीर्थं भवतो वचनादिह । त्वयोक्तं हि करिष्यामि कृतार्थः स्यां गृहे स्थिति "॥

" तेनोक्तं च तथा कृत्वा स्नानं शिष्यः समाचरेत् ।

" अलमर्थेन मे वत्स त्वद्गुणैरस्मि तोषितः । गृहाय त्वमनुज्ञाना मो "त्यनुज्ञापर्यंतं कार्यम् ।

तथा चोक्तं कूर्मपुराणे

"वेदं वेदौ तथा वेदान्वेदान्वा चतुरो द्विजः । अधीत्य चाधिगम्यार्थं ततः स्नायाद्द्विजोत्तम "॥इति।

---

१ ङङ्ख-चे । २ ह्य-हवि । ३ र-यावत्रावं । ४ र-जाचनीभि, अ-जायनीनि, ङङ्ख-जार्यान । ५ र यावत्

इदं च विस्तरतो भट्टपादैः "अथातो धर्मजिज्ञासे"त्यस्मिन् सूत्रे प्रपंचितमिति नेह प्रपंचितम्। दक्षिणा च गुरुतोषणार्था न तु मूल्यरूपा। विद्याया मूल्याभावात्। तथा च तापिनी श्रुतिः "सप्तद्वीपवती भूमिर्दक्षिणार्थेन कल्पत" इति। छंदोगश्रुतिरपि "यद्यप्यस्मा इलामद्भिः परिगृहीतां धनपूर्णां दद्यादेतदेव ततो भूय" इति। एतद्वियाग्रहणं।

हारीतोऽपि

"एकमप्यक्षरं यस्तु गुरुः शिष्येति वेदयेत्। पृथिव्यां नास्ति तद्द्रव्यं यद्दत्वाऽप्यनृणी भवेदिति"॥

यद्यप्येवं तथापि देयमाह मनुः (२।२४५)

"स्नास्यंस्तु गुरुणाऽऽज्ञप्तः शक्त्या गुर्वर्थमाहरेत्। क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमासनम्"॥

"धान्यवासांसि शाकं वा गुरवे प्रीतिमाहरन्निति"॥ आश्वलायन उपकल्प्यद्रव्याण्याह (३।८।१–२) "अथैतान्युपकल्पयीत समावर्त्यमानो मणिं कुंडले वस्त्रयुगं छत्रमुपानद्युगं दंडं स्रजमुन्मर्दनमनुलेपनमांजनमुष्णीषमित्यात्मने चाचार्याय यद्युभयोर्न विंदेताचार्यायैवेति"। करंजफलं पेषयित्वा तेनोद्वर्तनमुन्मर्दनमिति वृत्तौ। इदं च स्वकर्तृकं। 'समावर्तमान' इति सूत्रात्। एवं च तदंगभूतनांदीश्राद्धं स्वयमेव कार्यं। शौनकः

"कुर्वीत स्वयमेवेदं कर्माचार्यानपेक्षतः। विधायाभ्युदयश्राद्धं पूर्वेद्युरपरेऽन्हि चेति॥" अत्र हि त्वाथेल्यप्रयोगात् समानकर्तृकता गम्यते। अत्र कालनिर्णयश्चौलवत्। उक्तं च शौनकेन

"गोदानेनातिदिष्टत्वात्कर्मणोऽस्योत्तरायणं। पूर्वपक्षादियोगं च प्रतीक्ष्य ह्येतदाचरेदिति"॥ गोदानेऽपि चौलातिदेशाच्चौलवदित्युक्तम्। स्नातकधर्मा उक्ताः कूर्मपुराणे

"यज्ञोपवीतद्वितयं सोदकं च कमंडलुं। छत्रं चोष्णीषममलं पादुके चाप्युपानहौ"॥ धारयेदिति शेषः। आश्वलायनः (३।९।५–७) "तस्यैतानि व्रतानि भवन्ति। न नक्तं स्नायान्न नग्नः शयीत। न नग्नां स्त्रियमीक्षेतान्यत्र मैथुनाद्वर्षति न धावेन्न वृक्षमारोहेन्न बाहुभ्यां नदीं तरेन्न संशयमभ्यापद्येतेति"। याज्ञवल्क्यः (१।१२९) २५

"न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः। न विरुद्धप्रसंगेन संतोषी च भवेत्सदा"॥ स्वाध्यायो वेदस्तद्विरुद्धं तन्नाशकारकमित्यर्थः। विरुद्धप्रसंगो द्यूतादिः तथा (१।१३०)

"राजान्तेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा। दंभिहैतुकपाखंडिबकवृत्तींश्च वर्जयेत्"॥ आपदि गृह्णीयादित्यर्थः। दंभी द्रव्यार्थं धर्मलिंगधारी न श्रद्धया। हैतुकः सर्वत्र हेतुभिः संशयोत्पादकः। पाखंडी अस्थिमालादिविरुद्धवेषधारी। बकवृत्तिरधोदृष्टिः।

"अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः। शठो मिथ्याविनीतश्च बकवृत्तिरुदाहृत" इति मनूक्तेः (४।१९६)।

"शुक्लांबरधरो नीचकेशश्मश्रुनखः शुचिः। न भार्यां दर्शनेऽश्नीयान्नैकवासा न संस्थितः॥

"न संशयं प्रपद्येत नाकस्मादप्रियं वदेत्। नाहितं नानृतं चैव न स्तेनः स्यान्न वार्धुषी"॥ वार्धुषी निषिद्धवृद्ध्युपजीवी।

---

१ ग-धनेन। २ र-स्नास्य, अ-स्नास्या। ३ अर नमद्दतन्। ४ ने इति मुद्रितपाठ। ५ अ-स्कार्थल्य। ६ र-सि।

" दाक्षायणी ब्रह्मसूत्री वेणुमान् सकमंडलुः । कुर्यात् प्रदाक्षिणं देवमृद्गोविप्रवनस्पतीन् ॥ १३३ ॥
" न तु मेहेन्नदीछायावर्त्मगोष्ठांबुभस्मसु । न प्रत्यग्न्यर्कगोसोमसंध्यांबुस्त्रीद्विजन्मनः ॥ १३४ ॥
" नेक्षेतार्कं न नग्नां स्त्रीं न च संसृष्टमैथुनां । न च मूत्रपुरीषं वा नाशुची राहुतारकाः ॥१३५॥
" अयं मे वज्र इत्येवं सर्वं मंत्रमुदीरयन् । वर्षत्यप्रावृतो गच्छेत्स्वपेत्प्रत्यक्शिरा न च" ॥१३६॥
" अयं मे वज्रः पाप्मानमपहंत्विति " मंत्रः । गच्छेन्न धावेत् ।

"ष्ठीवनासृक्शकृन्मूत्ररेतांस्यप्सु न निक्षिपेत् । पादौ प्रतापयेन्नाग्नौ न चैनमभिलंघयेत् ॥१३७॥
" जलं पिबेन्नांजलिना न शयानं प्रबोधयेत् । नाक्षैः क्रीडेन्न धर्मघ्नैर्व्याधितैर्वा न संविशेत्॥१३८॥
जलमिति पेयमात्रोपलक्षणं । नांजलिना पिबेदिति गौतमेन पेयविशेषानुपादानादिति कश्चित्तन्न । सामान्यस्यापि गौतमीयस्य विशेषेण याज्ञवल्कीयेनोपसंहर्तुं शक्यत्वात् । अतो जलमेव न पेयमात्रमिति । शयानं श्रेष्ठं न* प्रबोधयेदिति । " नैकः स्वप्याच्छून्यगृहे श्रेयांसं न प्रबोधयेदिति " मनूक्तेः

" विरुद्धं वर्जयेत्कर्म प्रेतधूमं नदीतरं । केशभस्मतुषांगारकपालेषु च संस्थितिं"॥१३९॥
विरुद्धं जनपदकुलविरुद्धं । नदीतरणं बाहुभ्यां । अत उडुपादिना पारगमने न दोषः । नदीमिति तडागाद्युपलक्षणमिति कश्चित् । तत्र प्रमाणं मृग्यं । यदि परं मीमांसाभिज्ञः सन्नुद्देश्यविशेषणमविवक्षितमिति नीत्या नदीग्रहणमविवक्षितमेवं जलमात्रग्रहणमिति यदि मन्यसे तर्हि श्रेयांसमिति विशेषणविवक्षाहेतौ किमिति मूकोऽसि । एवं न ब्राह्मणं हन्यादित्यत्राप्यतिप्रसंगः ।

"नाचक्षीत धयंतीं गां नाद्वारेण विशेत्क्वचित् । न राज्ञः प्रतिगृण्हीयाल्लुब्धस्योच्छास्त्रवर्त्तिनः"॥ १४०
परस्य क्षीरादि पिबंतीं गां तस्मै नाचक्षीत । यद्वा वत्सं धापयंतीं अंतर्भाविनण्यंताच्छतृप्रत्ययः । न विनिवर्त्तयेदपि । " न वारयेद्गां धयंतीं न वाऽचक्षीत कस्यचिदिति ' मनूक्तेः ( ४१५ ) ।
" प्रतिग्रहे सूनिचक्रिध्वजिवेश्यानराधिपाः । दुष्टा दशगुणं पूर्वात्पूर्वादेते यथाक्रमं " ॥१४१॥
सूनी हिंसाशीलः । चक्री तिलपीडकः । ध्वजी सुराचक्रेण जीवी ।

" देवर्त्विक्स्नातकाचार्यराज्ञां छायां परस्त्रियाः । नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्त्तनानि च ॥१५२॥
"विप्राहिक्षत्रियात्मानो नावज्ञेयाः कदाचन । आमृत्योः श्रियमाकांक्षेन्न कंचिन्मर्मणि स्पृशेत्॥१५३
"दूरादुच्छिष्टविण्मूत्रपादांभांसि समुत्सृजेत्" ॥ ( १५४ ) पादांभः पादप्रक्षालनोदकं ॥
" श्रुतिस्मृत्युदितं कर्म नित्यं सम्यक् समाचरेत् ॥ १५४ ॥
"गोब्राह्मणानलान्नानि नोच्छिष्टो न पदा स्पृशेत् । न निंदाताडने कुर्यात्पुत्रं शिष्यं च ताडयेत्"॥१५५
कथं तर्हि एककवले गृहीते उच्छिष्टेन पुनः पात्रस्थं स्पृशते । भोजनार्थे पात्रस्थे न दोष इति शिष्टविगानाभावात्कल्प्यते

"कर्मणा मनसा वाचा यत्नाद्धर्मं समाचरेत् । अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु " ॥१५६॥
अभ्यनुज्ञातमपि भोजनावशिष्टमांसभक्षणादिकं लोकविद्विष्टमत एवास्वर्ग्यं नाचरेत् । धर्मपदेनापि नायोगान्न स्वार्थे तात्पर्यं । केचिन्त्विदानींतनानां मधुपर्के पशुवधानाचरणादीनामेतद्वचनमूलकत्वमिति वदंति । तन्न । कलिनिषिद्धत्वेनैवानाचरणात् । विधिविहितबाधकत्वायोगाच्च ।

---

१ र-रास्थे ।

" मातृपितृअतिथिभ्रातृजामिसंबंधिमातुलैः । वृद्धबालातुराचार्यवैद्यसंश्रितबांधवैः ॥ १५७॥
" ऋत्विक्पुरोहितापत्यभार्यादाससनाभिभिः। विवादं वर्जयित्वा तु सर्वान्लोकान्जयेद्गृही॥१५८
" पंच पिंडाननुद्धृत्य न स्नायात्परवारिषु । स्नायान्नदीदेवखातह्रदप्रस्रवणेषु च " ॥ १५९ ॥

परवार्यनुत्सृष्टोदकं ।

" परशय्यासनोद्यानगृहयानानि वर्जयेत् । अदत्तान्यग्निहीनस्य नान्नमद्यादनापदि " ॥ १६० ॥

अदत्तान्यननुज्ञातानीति ग्रंथकृतः ।

' कदर्यबद्धचौराणां क्लीबरंगावतारिणां । वैणाभिशस्तवार्धुष्यगणिकागणदीक्षिणां ॥ १६१ ॥
" चिकित्सकातुरक्रुद्धपुंश्चलीमत्तविद्विषां । क्रूरोग्रपतितव्रात्यदांभिकोच्छिष्टभोजिनां ॥ १६२ ॥
" अवीरास्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनां । शस्त्रविक्रयकर्मारतंतुवायश्ववृत्तिनां ॥१६३॥
" नृशंसराजरजककृतघ्नवधजीविनां । चैलधावसुराजीवसहोपपतिवेश्मनाम् ॥ १६४ ॥
"पिशुनानृतिनोश्चैव तथा चक्रिकबन्दिनाम् । एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा"॥१६५॥

कदर्य " आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत् । लोभाद्यः पितरौ भृत्यान्सकदर्य इति स्मृतेति लक्षितः । वैणो वेणुछेदनजीवी । वीणावादनजीवीति केचित् । गणदीक्षी बहुयाजकः । पराशरस्मृतिव्याख्याने तु गणान्नं । दीक्षी दीक्षितस्तस्य चेति व्याख्यातं । गणान्नं च " बहूनामेकभांडे पक्वमन्नं तदुच्यते " दीक्षितान्ननिषेधश्चाग्नीषोमीयपशुसंस्थापर्यंतं क्रीतराजको भोज्यान्न इत्यस्याप्रामाण्यादिति भाष्यकृतः । आचार्यास्तु वदंति । उभयोरपि श्रुतित्वाविशेषणाबाधोऽप्रामाण्यं । तदुक्तं

" क्रीतराजकभोज्यान्नशाक्यं चाथर्ववैदिकं । न च तस्याप्रमाणत्वे किंचिदप्यस्ति कारणमिति"॥

तथोभयोर्विषयोऽपि प्रदर्शितः ।

" आपद्धर्मा यथैवान्ये मुख्यासंभवहेतुकाः । तथैव प्राणपीडायां क्रीतराजकभोजनं ॥

"सामान्येनाभ्यनुज्ञाताद्विशेषश्च विशिष्यते"। विशेषोऽत्यंतनिर्दोषः स्तोकदोषेतरक्रियेति । प्रपंचितं चैतद्वार्तिककारैरिति काठिन्यभिया नेह विस्तरेण प्रपंचितं । अवीरा पतिपुत्ररहिता। कर्मारो लोहकारः । तंतुवायः सूचिशिल्पोपजीवी । श्वाभिर्वृत्तं जीवनमस्यास्तीति श्ववृत्तिः । राजा पुरोहितश्च । "राजपुरोहितान्नानि वर्जयेदिति" शंखस्मृतेः । कदर्यादयश्च द्विजातय एव । शूद्राणां वक्ष्यमाणदासादिव्यतिरेकेणाभोज्यान्नत्वात् ।

" शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणः । भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेदिति "॥१६६॥

अर्द्धसीरी कृषिफलभागग्राही । अहं त्वदेकाश्रित इति यो निवेदनमात्मनः करोति । शूद्रादीनभोज्यान्नत्वमापद्विषयमिति हरदत्तः । चतुर्विंशतिटीकायां तु

" कंदुपक्वं शूलपक्वं पायसं दधि सक्तवः । एतानि शूद्राद् ग्राह्याणि भोज्यानि मनुरब्रवीदिति " ।

वचनोपात्तपरमिति । शूले यत्पक्वमस्पृष्टमित्यर्थः । परंतु कलावेतेषां भोज्यान्नत्वनिषेधान्नातीव परिच्छेदोऽस्माभिः क्रियते । कलिवर्ज्यानि च समयमयूखे दर्शयिष्यामः । माधवीये मार्कंडेय "न म्लेंच्छभाषां शिक्षेत न पश्येदात्मनः शकृत् । वर्जयेन्मार्जनीरेणुं नापेयं च पिबेद् द्विज"॥ इति अपेयं कांजिकादि । मनु (४।१८)

१ अडइ-न प्रमाण । २ अरदइ-तातचरणकृतसमयमयूखे ज्ञेयानि । ३ अड-कांतिकादि ।

" वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च । वेषवाग्बुद्धिसारूप्यमाचरन्विचरेदिह ॥
" नित्यं शास्त्राण्यवेक्षेत नियमांश्चैव वैदिकान् । नेक्षेतोद्यंतमादित्यं नास्तंयंतं कदाचन ॥
" नोपरक्तं न वारिस्थं न मध्यं नमसोगतं । न लंघयेद्वत्सतंत्रीं न प्रधावेच्च वर्षति " ॥

वत्सतंत्री वत्सबंधनरज्जुः । वत्सग्रहणं च गोत्रजातेरुपलक्षणमिति हरदत्तः ।

" न चोदके निरीक्षेत स्वं रूपमिति धारणा ॥
" नाश्नीयाद्भार्यया सार्द्धं नैनामीक्षेत चाऽश्नतीं । क्षुवंतीं जृंभमाणां वा न चासीनां यथासुखं ॥
" नांजयंतीं स्वके नेत्रे न चाभ्यक्तामनावृतां । नान्नमद्यादेकवासा न नग्नः स्नानमाचरेत् ॥
" न मूत्रं पथि कुर्वीत न भस्मनि न गोव्रजे । न फालकृष्टे न जले न चित्यां न च पर्वते ॥
"नोदक्ययोऽभिभाषेत यज्ञं गच्छेन्न चाऽवृतः"। अवृतो यजमानेनानाकारितो लोभान्न गच्छेत् । द्रष्टुं तु कामं गच्छेत् । 'न यज्ञमवृतो गच्छेद्दर्शनाय तु काममिति' गौतमोक्तः ( १।९।५४–५५ )।

" स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत् । नदीमिंद्रायुधं दृष्ट्वा कस्यचिद्दर्शयेद्बुधः ॥
" न भुंजीतोद्धृतस्नेहं नातिसौहितमाचरेत् " । अनेन चोद्धृतस्नेहतक्रादिभोजनमर्नाचारः । यत्तु तक्रादिभिन्नपिण्याकादिपरत्वं कल्पयन्तीति न तत्र किंचिन्मूलं । सौहितं अत्यशनं ।

" न नृत्येदथवा गायेन्न वादित्राणि वादयेत् । न पादौ धावयेत्कांस्ये कदाचिदपि भाजने ॥
" न भिन्नभांडे भुंजीत न भावप्रतिदूषिते । उपानहौ च वासश्च धृतमन्यैर्न धारयेत् ॥
" उपवीतमलंकारं स्रजं करकमेव च । बालातपः प्रेतधूमो वर्ज्यो भिन्नं तथासनं " ॥

बालातपः शरत्कालातपः । संगवातप इत्येके ।

" न कर्म निष्फलं कुर्यान्नायत्या न सुखोदयं । गवां पृष्ठेन यानं तु सर्वथैव विगर्हितं" ॥

रथादियोगे त्वीषद्विगर्हितमिति ज्ञेयं ।

" रात्रौ च वृक्षमूलानि दूरतः परिवर्जयेत् । सर्वं च तिलसंबद्धं नाद्यादस्तमये प्रति ॥
" नार्द्रपादस्तु भुंजीत नार्द्रपादस्तु संविशेत् । न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविः कृतं ॥

अयं च साक्षादुपदेशनिषेधः । " श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः " इति करणे तु न दोषः । उच्छिष्टं भुक्तावशिष्टं न दद्यात् । शुद्रस्य गौतमेनोच्छिष्टाशनं शिल्पवृत्तिश्चेति ( २।१।६१–२९ ) उच्छिष्टाशनस्याभ्यनुज्ञानान्न दोषः । दातुस्तु भवत्येव । एवं च यदि प्रत्यवायमंगीकृत्योच्छिष्टं ददाति तदा तेन भक्षणीयं । यथा कुरुक्षेत्रादौ दातुरभ्युदयः प्रतिग्रहीतुर्दोष इत्यत्रापीति केचित् । सांप्रदायिकास्तु उच्छिष्टदानप्रतिषेधो गृहस्थशूद्रविषयः । तद्भिन्नाय तुदेयं । तथा च व्याघ्रः

" उच्छिष्टमन्नं दातव्यं शूद्रायागृहमेधिने । गृहस्थाय तु दातव्यमनुच्छिष्टं दिने दिन इति " ॥
" न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्" । धर्मं धर्मशास्त्रं । पूर्वधर्मनिषेधस्तु दंडनीतिविषय इति व्याख्यातारः ।

" न संहताभ्यां पाणिभ्यां कंडूयेतात्मनः शिरः । न स्पृशेच्चैतदुच्छिष्टो न च स्नायाद्विनांततः " ॥

एतत् शिरः । इदं च शिरःस्नानं शक्तस्य ।

१ अर–का । २ ह्र–कृत । ३ दइअ दृष्ट, र–दृष्ट । ४ अर–माना । ५ र–प्रेतभूमो । ६ इर–वर्ज्या ७ र–न्याप । ८ ह्र–न्याप । ९ अ–नु । १० इ–ग्रह्य । ११ अदर–पूर्वनिषेधस्तु ।

"न स्नानमाचरेद्भुक्त्वा नातुरो न महानिशि"। भोजनोत्तरं स्नानस्य निषेधो रागप्राप्तस्य।
"भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वादयेत्। शुष्कवैरं विवादं च न कुर्यात्केनचित्सह" ॥
शुष्कं फलशून्यं। एवं विवादोऽपि।

"नाज्ञातेन समं गच्छेन्नैको न वृषलैः सह। अनातुरः स्वानि खानि न स्पृशेदनिमित्ततः" ॥
खानि छिद्राणि।

"रोमाणि च रहस्यानि सर्वाण्येव विवर्जयेत्। प्रतिग्रहसमर्थोऽपि प्रसंगं तत्र वर्जयेत् ॥
"न धर्मस्यापदेशेन पापं कृत्वा व्रतं चरेत्। यमान्सेवेत सततं नित्यं च नियमान्बुधः ॥
"आनृशंस्यं क्षमा सत्यमहिंसा दममस्पृहा। ध्यानं प्रसादो माधुर्यमार्जवं च यमा दश ॥
"शौचमिज्यातपोदानं स्वाध्यायोपस्थनिग्रहः। व्रतोपवासौ मौनं च स्नानं च नियमा दश ॥
"नाद्याच्छूद्रस्य पक्वान्नं विद्वानश्राद्धिनस्तथा"। अश्राद्धिनः श्रद्धारहितस्य।
"आददीताममेवास्मादवृत्तावेकरात्रकं। उत्तमैरुत्तमैर्नित्यं संबंधानाचरेत्सदा ॥

"निनीषुः कुलमुत्कर्षमधमानधमांस्त्यजेत्। गुरून् भृत्यांश्चोज्जिहीर्षन्नर्चिष्यन् देवतातिथीन् ॥
"सर्वतः प्रतिगृह्णीयान्न तु तृप्येत्स्वयं ततः। येनास्य पितरो याता येन याताः पितामहाः ॥
"एषोदिता गृहस्थस्य वृत्तिर्विप्रस्य शाश्वती। स्नातकव्रतकल्पश्च सत्यवृद्धिकरः शुभ" इति ॥
अत्र "स्वर्ग्यायुष्ययशस्यानि व्रतानीमानि धारयेदिति" मनुस्मृतावुपक्रमात् स्नातकव्रतकल्पश्च
"सत्यवृद्धिकरः शुभ" इत्युपसंहाराच्च मध्ये श्रुताना नञासुपपदेनान्वयात्पर्युदासा अंगीक्रियंते।
तदुक्तं भगवता जैमिनिना (४।१।२) "तदुत्सर्गे कर्मणि पुरुषार्थायेति"। तथा
"उपक्रमे श्रुतं कर्मचाविनतपद यत। तदन्यत्रबलात्कर्म विशेषो नोऽत्र विद्यते ॥
"तेन लक्षणयाऽप्यत्र पर्युदासः स च क्रतो। बहिःश्रुतः फलाकांक्षी पुरुषार्थत्वमृच्छतीति" ॥
संकल्प एव वाऽत्र लक्ष्यते। उदाहृता च तंत्ररत्ने स्मृतिः

"त्रिसंध्यं जपता तेन सावित्री नेक्ष्य इत्ययं। आदित्यं ध्यायता कार्यः संकल्पः पापनाशन" ॥ इति
विस्तरस्तु तंत्ररत्नादौ द्रष्टव्यो दुर्गमत्त्वभिया नेह प्रपंचितः। अन्ये च स्नातकधर्मा
मानवगौतमीयादिशास्त्रे द्रष्टव्या। विस्तरभयात्तु नेह प्रपंचिताः। इति स्नातकधर्मप्रकरणं ॥
स्नातकभेदा उक्ता गोभिलेन "विद्यास्नातको व्रतस्नातको विद्याव्रत. स्नातकश्चेति"। विद्या-
मेवाधीत्य स्नानं कृतवानिति विद्यास्नातकः। व्रतान्येव कृत्वा स्नानं कृतवानिति व्रतस्नातकः।
विद्यामधीत्य व्रतानि कृत्वा च य. स्नाति स उभयस्नातक.। तेषामंत्यः श्रेष्ठः। उभौ तुल्यौ।

इति स्नातकभेदाः ॥

उपकुर्वाणकस्य गार्हस्थ्यं कर्तुं विवाह उक्तो याज्ञवल्क्येन (आचारे ५२)
"अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्।
"अनन्यपूर्विकां कांतामसपिंडां यवीयसीं। अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजामिति" ॥
अस्यार्थः। लक्षण्यां बाह्याभ्यंतरलक्षणैर्युक्तां। बाह्यानि मनुनोक्तानि (३।१०)

---

१ इ-गृही। २ इ-शिरस्थानि, ङ-रावरास्थानि। ३ अ-स। ४ ङ-सर्वकतो। ५ ग-तोऽत्र।

" अव्यंगांगीं सौम्यनाम्नीं हंसवारणगामिनीं । तनुलोमकेशदशनां मृद्वंगीमुद्वहेत्स्त्रियामिति "॥
वर्ज्या आह स एव ( ३।८-९ )
" नोद्वहेत्कपिलां कन्यां नाधिकांगीं न रोगिणीं । नर्क्षवृक्षनदीनाम्नीं नांत्यपर्वतनामिकां ॥
" न पक्ष्यहिप्रेष्यनाम्नीं न* विभीषणनामिकामिति " । विष्णुपुराणे ( ३।१०।१८-१९ )
" न श्मश्रुव्यंजनवतीं न चैव पुरुषाकृतिं । न घर्घरस्वरां क्षामां तथा काकस्वरां न च ॥
" नानिबद्धेक्षणां तद्वद् वृत्ताक्षीं नोद्वहेद् बुधः " । अनिबद्धेक्षणां मनोनुरंजनेक्षणरहितां ।
" यस्याश्चे रोमशे जंघे गुल्फौ यस्यास्तथोन्नतौ । गंडयोः कूपकौ यस्या हसन्त्यास्तां च नोद्वहेत् ॥
" नातिरक्तच्छविं पांडुकरजामरुणेक्षणां । आपीनहस्तपादां च न कन्यामुद्वहेद् बुधः ॥
" न वामनीं नातिदीर्घां नोद्वहेत्संगतभ्रुवं । न चातिच्छिद्रदशनां न करालमुखीं नरः"॥इति ।
आश्वलायनेन ( गृ. सू. १।५।५-६ ) "अष्टौ पिंडान्कृत्वा ऋतमग्रे प्रथमं जज्ञ ऋते सत्यं प्रतिष्ठितं । यदियं कुमारी येभिजाता तदियमिह प्रतिपद्यतां । यत्सत्यं तद्दृश्यतामिति पिंडानभिमंत्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति । क्षेत्राच्चेदुभयतः सस्यात्प्रतिगृण्हीयादन्नवत्यस्याः प्रजा भविष्यतीति विद्याद्गोष्ठात्पशुमती वेदिपुरीषाद् ब्रह्मवर्चस्विन्य विदासिनो[3]ह्रदात्सर्वसंपन्ना देवनात्कितवी चतुष्पथाद्द्विप्रव्राजिनी[4] रिणाद्धन्या श्मशानात्पतिघ्नीति" । देवनं द्यूतं । ईरिणमूखरं । न अन्यः पूर्वो यस्याः साऽनन्यपूर्विका । दानेनोपभोगेन वा । कांतां मनोनयनानंदकारिणीं । यथोक्तमापस्तंबेन " यस्यां मनश्चक्षुषोर्निबंधस्तस्यामृद्धिरिति " । इयं च परीक्षा कुलपरीक्षोत्तरं कार्या । " कुलमग्रे परीक्षेत "इत्याश्वलायनस्मृतेः ( १।५।१ ) ।
मनुः ( ४।२४७ ) ' उत्तमैरुत्तमैर्नित्यं संबंधानाचरेत्सहेति ' । उत्तमानाह स एव
" विशुद्धाः कर्मभिश्चैव श्रुतिस्मृतिनिदर्शितैः । अविप्लुतब्रह्मचर्या महाकुलसमन्विताः ॥
" अक्रोधनाः सुप्रसादाः कार्याः संबंधिनः सदा " । नीचानाह स एव
"ये स्तेनाः पिशुनाः क्लीबा ये च नास्तिकवृत्तयः । विकर्मणा च जीवंतो विकुनाकृतयस्तथा ॥
" प्रवृद्धवैराः शूरैर्ये राजकिल्बिषिणस्तथा । ब्रह्मस्वादननिन्याश्च कदर्याश्च विगर्हिताः ॥
" अप्रजा येषु वंशेषु स्त्रीप्रजाप्रसवास्तथा । पतिघ्न्यश्च सुवासिन्यस्तांश्च यत्नेन वर्जयेत् " ॥
तान् वशात ।
" महांत्यपि समृद्धानि गोजाविधनधान्यतः । स्त्रीसंबंधे दशैतानि कुलानि परिवर्जयेत् ॥
"हीनक्रियं निःपुरुषं निच्छंदो रोमशार्शसं । क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च"॥ तथा
" कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च । कुलान्यकुलतां यांति ब्राह्मणातिक्रमेण च ॥
" शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः । गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया ॥
" अयाज्ययाजनैश्चैव नास्तिक्येन च कर्मणा । कुलान्यकुलतां यांति यानि हीनानि मंत्रत"॥ इति ।
विष्णुः "अत्रं पित्रा परीक्षेत माता कन्यां परीक्षयेत् । कृष्या भूमिं परीक्षेत आचारेण कुलं तथेति"॥
नारदेन कन्यालक्षणान्युक्तानि
" पूर्णचंद्रमुखी कन्या बालसूर्यसमप्रभा । विशालनेत्रा रक्तोष्ठी सा कन्या लभते सुखं ॥

१ ह-द्वंती । २ अइडापफड-थ्या । ३ ' अविदासिनो ' इतित्याश्वलायनीयपाठः । ४ फट-प्रजा । ५ फ-र्सी । * नच भीषणेति मुद्रित मनुस्मृति पुस्तके पाठः ।

एवं स्थिते मातुलकन्यापरिणयने यत्प्रायश्चित्तादिस्मरणं तदासुरादिविवाहोत्पन्नाविषयं द्रष्टव्यं । किं तत्र प्रमाणमितिचेदुच्यते ।

"गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः । गोत्ररिक्थानुगः पिंडो व्यपैति ददतः स्वधेति" ( ९।१४२ ) मनुवचनेनोद्देश्यविशेषणस्य पुंस्त्वस्याविवक्षितत्वेन दानकर्मीभूतस्य जनककुले संबंधमात्रनिवृत्या सापिंड्यस्यापि निवृत्तिः प्रतीयते । अतः कन्याया अपि ब्राह्मादिविवाहचतुष्टये दानसद्भावात्तत्र च सापिंड्यस्य निवृत्तेस्तत्परं मातुलकन्यापरिणयनं । आसुरादिविवाहेषु दानाभावात्सपिंड्यानिवृत्तेस्तत्परो निषेध इति । कथमिदानीं मातुलकन्यावत्पैतृष्वस्रेयी दौहित्री वा न परिणीयते । "अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न त्विति" निषेधादतो न दुराचारत्वमिति । अत्रोच्यते । "गर्भे तु नौ" इत्यस्यामृचि पूर्वेषामाचरितं स्मृत्यनुमेयश्रुतिविरोधान्न तादृशविधिकल्पकं । यत्र हि नान्यविरोधोऽप्राप्तार्थकत्वं च तत्रैव विधिनिषेधकल्पनं यथोल्मुकैर्ह स्मै पूर्वे समाजग्मुरित्यादिषु । अन्यथा "प्रजापतिरुपसमभ्यैत्स्वां दुहितरमि" त्याद्यर्थवाददर्शनादन्यैरपि दुहितृगमनं कर्तव्यमिति कल्पनं तदुक्तरीत्या केन निवार्येतामित्रार्थवादेषु च बहवोऽर्थाः । केचन सिद्धार्थानुवादका यथाग्निर्हिमस्य भेषजं वायुर्वै क्षेपिष्ठा देवतेति । केचन रागप्राप्तानुवादका यथा तस्माद्वत्सो मातरं स्वसारं चाधिरोहति । यथा च "तस्माच्छ्वश्रूः श्वशुरश्च पुत्रश्च दुहिता च सुरां पीत्वा विलपंतश्चासते" इत्यादि केचन प्रायो दृष्टानुवादका यथा तस्मात्प्रजा दशमासान् गर्भं धृत्वा एकादशमनुप्रजायंन" इत्यादयः । नैतावता विध्यादिकल्पनं अत एव स्वार्थे तात्पर्याभावान्न विधिपरत्वमंगीकृतं सोऽरोदीदित्येवमादीनां मीमांसकैः । एवमत्रापि "गर्भे नौ" इत्यस्यां पूर्वाचरितमात्रं कीर्त्यते इत्यादि शास्त्रदीपिकाप्रकाशे पितामहचरणैर्विस्तरेणोक्तमेव । वस्तुतस्तु नौ आवां जनिता जनयिता गर्भे नु एव कः गर्भे कृतवानिति माधवाचार्यव्याख्यानमेव युक्तं । करिष्यस्यानुदात्तत्वेन पातादेर्फांतत्वदर्शनाच्च । जनितेत्यस्यांतोदात्तत्वेन पाठात्तृजंतमेव न तु लुडंतम् । 'तिङ तिङ' (८।१।२८) इत्यनुदात्तत्वापत्तेः । तेन जनितेत्यस्य जनयिष्यतीति व्याख्यानमयुक्तं । अत एव "न वा उ ते तन्वा तन्वं [1] संपपृच्यां पापमाहुर्यः स्वसारं निगच्छात् । अन्येन मत्प्रमुदः कल्पयस्व न ते भ्राता सुभगे वष्ट्येतत् (ऋ. सं. ७।६।८।)" इति यथोक्तप्रत्याख्यानं संगच्छते । अस्यार्थः । हे सुभगे ते तव तन्वा शरीरेण तन्वां स्वीयां तनुं न वा उतैव संपपृच्यां संपर्कयिष्यामि । तत्र हेतुः । यः स्वसारं निगच्छात् यः स्वसारं गच्छति तं लोका देवाश्च पापिष्ठमाहुः । तर्हि मे संतोषः कथं स्यात्तत्राह । मत् मत्तः जायमानाः प्रमुदः त्वं अन्येन पुंसा कल्पयस्व अर्जयस्व ते भ्राता यमः एतत्कर्म न वष्टि न कांक्षतीति' दिक् । आयाहिंद्रित्यस्यां च रागप्राप्तस्यानुवादः । कथमनियतप्राप्तस्य नित्यवदनुवाद इति चेत् । "तस्मात्प्रजा" इत्यस्य वाक्यस्य नित्यप्राप्तिः । तत्र यथैवानियतप्राप्तिमुपजीव्यानुवादोपपत्तिरेवमत्रापि । यत्तु दानेन सापिंड्यं निवर्तेत इति तत्रोच्यते

"माता पिता वा दद्यातां यमद्भिः पुत्रमापदि । सदृशं प्रीतिसंयुक्तं स ज्ञेयो दात्रिमः सुतः"

१ इ-म । २ ख-ह्तस्य । ३ फ-पूर्वे ; ढइ-पूर्वे । ४ फ-मनु. । ५ र-पाठ । ६ र-नत्वा ।
७ र-ये । ८ र-च्छा । ९ मनु (९।१६८)।

इति पुंस्त्वविशिष्टानुवादेन संज्ञाकरणात्कन्यायाश्च दत्रिमसंज्ञाभावाद्दत्रिमानुवादेन विधीयमानापि सापिंड्यनिवृत्तिर्न कन्याया भवति ।

नन्वेवं दत्रिमस्य सापिंड्यनिवृत्तौ जनककन्यादिपरिणयनं स्यात् । स्यादेव यद्यूर्ध्वं सप्तमात्पितृबंधुभ्यो मातृबंधुभ्यः पंचमाद्बीजिनश्च सप्तमादिति वाक्यं नाभविष्यत् । अत्र हि बीजिग्रहणेन दत्रिमस्य जनककुले सापिंड्यमस्तीति ज्ञायते । गोत्रनिवृत्तिस्तु । "स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे" इत्यनेन वचनेन न त्वेनेन । अतो मातुलकन्यापरिणयनं दुराचारः । अत एव भट्टपादैरुक्तं "वसुदेवांगजाता च कौंतेयस्य विरुध्यते" इति । बौधायनेन च दुराचारान्परिगणयता स्पष्टमेवोक्तं ( १।१।१७–२२ ) "पंचधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतो यानि दक्षिणतस्तान्यनुव्याख्यास्यामो तथैतदनुपदेन सहभोजनं स्त्रिया सहभोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृगमनमिति । अथोत्तरत ऊर्णाविक्रयः सीधुपानमुभयतोदद्भिर्व्यवहार आयुधीयकं समुद्रयानमिति । तत्रेतरदितरस्मिन्कुर्वन् दुष्यति । तद्देशप्रामाण्यात् मिथ्यैतदिति गौतमः । उभयमेव नाद्रियेत शिष्टस्मृतिविरोधदर्शनादिति" ग्रंथेन । सीधु मद्यं । उभयतो दंता येषां ते उभयतोदतः । तैरुभयतोदद्भिः । व्यवहारस्तत्करणकय विक्रयरूपः पानादिरूपो वा । आयुधीयकं आयुधेन जीवनम् । बृहस्पतिरपि

"उद्वह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः । मत्स्यादाश्च नराः पूर्वे व्यभिचाररताः स्त्रियः ॥

"उत्तरे मद्यपाश्चैव स्पृश्या नृणां रजस्वलाः । सजाताश्चापि गृण्हंति भ्रातृभार्याममर्तृकां ॥

"सर्वदेशेष्वनाचारो रथ्यातांबूलचर्वणमिति" ॥

विशेषः स्मृत्यंतरे "गायत्र्या उपदेष्टुश्च कन्यां नैवोद्वहेद्द्विजः ॥

"गुरोश्च कन्यां शिष्यो वा तत्संतत्याऽपि नेष्यते । पुरुषत्रयपर्यंतं भ्रात्रादेर्नैतदिष्यत" इति ।

सपत्नमातामहकुले सापिंड्यमाह सुमंतुः "पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तद्भगिन्यो मातृष्वसारस्तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयान्यन्यथा संकरकारिणः स्युरिति" । द्वितीयतच्छब्देन मातृपरामर्शः । अत्र च यावद्वचनं वाचनिकमिति न्यायात्परिगणितेष्वेव सापिंड्यं न सप्तमादिपर्यंतं एतत्सापिंड्यविषयमेव ।

"असपिंडा च या मातुरसपिंडा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुन"(३–५)इति॥

मनुवाक्यमिति निबंधकृतः । एतदुपपत्तिश्च द्वैतनिर्णये उक्ता । अत्रासपिंडामिति निषेधः सार्ववर्णिकः । असमानार्षगोत्रजामिति त्रयाणां तत्र क्षत्रियवैश्ययोः पुरोहितगोत्रं न स्वत इति । यवीयसीमिति वयसा परिमाणेन च न्यूनां । वयोन्यूनताया विशेषमाह मनुः ( ९।९४ )

"त्रिंशद्वर्षोद्वहेत्कन्यां हृद्यां द्वादशवार्षिकीं । त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वर" ॥ इति ।

त्र्यष्टवर्षश्चतुर्विंशतिवर्षः । बृहस्पतिर्विशेषमाह

"त्रिंशद्वर्षो दशाब्दां तु भार्यां विंदेत नग्निकां । एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयादिति" ॥

भ्रातृमतीति पुत्रिकाकरणशंकानिवृत्तये मनुः ( ३।११ )

---

१ फ–यद्यूर्ध्वं । २ ह्ल–न्ये । ३ फ–द्विजाः–सर्वे ।

" यस्यास्तु न भवेद्भ्राता न विज्ञायेत वै पिता। नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया" ॥ इति। अनेन पितुरभिप्रायमात्रेणापरिभाषितापि पुत्रिका भवतीति गम्यते। अत एव गौतमः (२८।१७–१८) " अभिसंधिमात्रात्पुत्रिकेत्येकेषां। तत्संशयान्नोपयच्छेदभ्रातृकामिति "। पुत्रिकाकरणप्रकारादिकं व्यवहारमयूखे दर्शयिष्यामः। असमानार्षगोत्रजामिति। आर्षं च गोत्रं च आर्षगोत्रे। समाने आर्षगोत्रे च समानार्षगोत्रे। समानार्षगोत्रे जाता समानार्षगोत्रजा। न तादृशा असमानार्षगोत्रजा। अत्र च प्रत्येकं प्रतिषेधः। समानार्षा नोद्वाह्या। सगोत्रा च नोद्वाह्येति प्रत्येकं प्रायश्चित्ताम्नानात्। तच्च प्रायश्चित्तमयूखे वक्ष्यते। आर्षं प्रवरः। गोत्रप्रवर्तकस्य ऋषेर्व्यावर्तको मुनिविशेषः। वत्सार्ष्टिषेणयोः गोत्रभेदे प्रवरैक्यात् द्व्यामुष्यायणानां संकृतीनां प्रवरभेदेऽपि सगोत्रत्वादुभयोपादानं। मातामहगोत्राऽप्यपरिणेया। तथा च मनुः " मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च। समानप्रवरां चैव त्यक्त्वा चांद्रायणं चरेदिति "। अत्र सगोत्रा नोद्वाह्येत्यनेनैव मातृगोत्रपर्युदासे सिद्धे मातृगोत्रग्रहणं मातुर्विवाहात्पूर्वगोत्रनिवृत्त्यर्थं। तथा च मातामहगोत्रा नोद्वाह्येति फलितं। तच्च माध्यंदिनीयानां। तथा च चतुर्विंशतिमतटीकायां सत्याषाढवचनं " मातृगोत्रं माध्यंदिनीयानामिति "।

अथ गोत्रप्रवरनिर्णयः। तत्र स्मृत्यर्थसारे गोत्रलक्षणमुक्तं

" [1]जमदग्निभरद्वाजविश्वामित्रात्रिगौतमाः। वसिष्ठकश्यपागस्त्या मुनयो गोत्रकारिणः॥

† " एतेषां यान्यपत्यानि तानि गोत्राणि मन्वते " इति। अपत्यानीति न साक्षात् किंतु पुत्रपौत्रादिपरंपरया। तथा बौधायनोऽप्याह " एतेषामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याचक्षत " इति। एवमुच्यमाने भृग्वादीनां गोत्रत्वं न स्यात्। तत्र केचिदिष्टापत्त्या परिहरंति। अपरे भृग्वादिषु अनादिशिष्टानां गोत्रत्वसमाख्यानात्प्रवरमंजरीप्रयोगपारिजातमदनपारिजातादिग्रंथविरोधाच्च न गोत्रत्वमपलपितुं शक्यं। किंतु यत्र शिष्टानां गोत्रत्वप्रसिद्धिस्तद्गोत्रं मंत्रत्वादिवदित्याहुः। वस्तुतस्तु एतस्य पक्षस्य सूत्रानारूढत्वात्प्रवरवत्त्वं गोत्रलक्षणं युक्तमुत्पश्यामः। तथा च सत्याषाढसूत्रे प्रवरानुक्त्वा तैर्गोत्राणीत्युक्तं। व्याख्यातं च शबरस्वामिभिः " प्रवरैर्गोत्राणां गणव्यवस्था समानता चेति "। एवं च स्वरूपतः समानतया च गोत्रज्ञाने प्रवराणां हेतुत्वमुक्तं। तथा च प्रवरत्वमेव गोत्रमित्युक्तं भवति। ततश्च यमेवैकमधिकृत्य प्रवराम्नानं सोऽधिकृतो गोत्रं। तस्य चैकस्याधिकृतस्य येषु स्वस्वगणान्तर्गतेषु अनुवृत्त्याख्यं साम्यं ते सगोत्रा इति फलितमिति पितामहाचरणोक्तपक्ष एव श्रेयान्। एवं च शिष्टाचारोऽप्यनुगृहीतो भवति। बहुग्रंथविरोधश्च परिहृतो भवति। यत्तु बौधायनादिभिरगस्त्याष्टमानामपत्यं गोत्रमित्युक्तं। न तल्लक्षणाभिप्रायेण किंत्वयोगव्यावृत्त्येति ज्ञेयं। न चैवं वत्सविदयोरार्ष्टिषेणादिभिः सगोत्रतापत्तिरिति वाच्यम्। " एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते। तावत्समानगोत्रत्वमन्यत्र भृग्वंगिरसां गणादिति" बौधायनेन पर्युदासात्। अनेन च पर्युदासेन ज्ञायते भृग्वंगिरोगणेष्वस्ति सगोत्रत्वमिति। यत् प्रवरमंजरीकृता क्वचिन्नास्त्येवैषां सगोत्रतेत्युक्तं तत्पूर्वापरग्रंथविरोधात्परमताभिप्रायेण यत्तु विश्वनाथेनोक्तं

---

१ ख–पि। २ फ–स्यत्वात्। † ग–कानि तानि गोत्राणि यत्प्रवर्तकतेषामित्याह। ३ ख–सत्याषाढादिति

" भृग्वंगिरोन्यत्र्यत्किंचिद्दपेर्यावत्सु वर्त्तनं । तावत्समानगोत्रत्वमिति केचित्समूचिरे ।
" तत्रैकं सति सर्वत्र सगोत्रत्वनिबंधने । अनुद्वाहे तु कुत्र स्यात्प्रवरैक्यं प्रयोजकमिति "॥ तत्स्माभिः पूर्वमसंकीर्णोदाहरणोपन्यासाद्पास्तं । तस्मादस्ति हरितादीनामपि गोत्रत्वं । यद्यपि गोत्राणामानंत्यं तथापि यानधिकृत्य प्रवरा आम्नातास्ता दशगणा एकोनपंचाशत् । उक्तं च बौधायनेनं

" गोत्राणां च सहस्राणि प्रयुतान्यर्बुदानि च । ऊनपंचाशदेतेषां प्रवरा ऋषिदर्शनादिति"॥

ते गणा यथा । भृगूणां सप्त ७ । जमदग्नेस्तदंतर्भावः । विश्वामित्राणां दश १० । अत्रेश्चत्वारः ४ । अंगिरसां सप्तदश १७ । अत्रैव गौतमभरद्वाजयोरंतर्भावः । कश्यपानां त्रयः ३ । वसिष्ठानां चत्वारः ४ । अगस्तेश्चत्वारः ४ । तथा च संग्रहे उक्तं

" सप्तेह भृगवः सप्त दशांगिरस एव च । ततोऽत्रयश्च चत्वारो बोद्धव्याः कश्यपास्त्रयः ॥
" चत्वारोऽत्र वसिष्ठाः स्युर्विश्वामित्रास्ततो दश । अगस्तयस्तु चत्वार इति संग्रहकृद्वचः " ॥

प्रवराः शिष्टपरंपराप्रसिद्धाः ।

इति गोत्रप्रवरलक्षणं ॥

" अथोद्दिष्टगणक्रमेण बौधायनादिसूत्रोक्तानि गोत्राणि प्रदर्श्यंते । तत्र तावत् भृगूणां सप्त अंतर्गणाः ।

† तत्र केवलभार्गवाः पंच । आर्ष्टिषेणाः यस्काः मित्रयुवो वैन्याः शुनका इति । तद्यथा । आर्ष्टिषेणा नैरथयो ग्राम्यायणयः कात्यायनाश्वाद्रायणाः पैटकलायनाः सिद्धाः सुमनायनाः गौरीभिरांमिरित्येते आर्ष्टिषेणाः । तेषां पंचार्षेयाः । भार्गवच्यावनाप्नवानार्ष्टिषेणानपेति । एषामविवाहः । इत्यार्ष्टिषेणगणः ।

यस्को मौनो मूको वाधूलो वर्षपुष्पः मातुलयो ¶ राजतैनो दुर्दिनो भास्करो दैवतायनो जैवंतायनो वाकलयो माध्यमेयो वासयः कौशांबेयाः कौटिल्याः सात्यकेयाः कौचिल्याः सत्यकयश्चित्रसेनाः भार्गतयास्ताकर्श्वेकेयाः । औतथाः औगुविन्नतयः भागुरिश्च इत्येते यस्काः । तेषां त्र्यार्षेयः प्रवरो । " भार्गववैतहव्यसावेतसेति " । इति यस्कगणः ॥

मित्रयुवो रौक्मायणाः नाशायजनाः रोष्टायनाः रौक्योयनाः सखंडिनाः सुरभिनेया माल्यादथा वाल्यायना महावाल्यास्ताक्ष्यायणा औरक्षायणा वाजायना उक्षायणा माजाघयः कैतवायना इत्येते मित्रयुवस्तेषां त्र्यार्षेयः प्रवरः । ' भार्गववाध्र्यश्ववैवोदासेति ' । इति मित्रयुगणः । वैन्याः पार्थाः बाष्कलास्तेषां त्र्यार्षेयः प्रवरो भवति ' भार्गववैन्यपार्थेति ' ॥ इति वैन्यगणः । शुनका गार्त्समदा यज्ञपयः सौगंधयः स्वार्दमायना गांगायना मत्स्यगंधा भार्गायणाः श्रोत्रियास्तैत्तिरिया इत्येते शुनकास्तेषामेकार्षेयः प्रवरः शुनकेति गृत्समदेति वा । इति शुनकगणः । इति केवलभृगवः ।

अथ गणद्वयं सविष्यतंगत वत्सविदाख्यं तदुच्यते । मार्कंडेया मांडव्या मांडूकेयाः काश्येयाः कासेयाः* कासय आलेखन दार्भायणाशार्कराक्षा दैवस्यायनीः शौनकायनाः माधूकेया पार्षिकाः

---

१ र-तत्रेति पितामहचरणा वत्साष्टिषेणयोर्विदाष्टिषेणयोश्च भिन्नगोत्रयोः समानप्रवरयो रसगोत्रमित्यनेन पर्युदासासंभवेन असमान प्रवरामित्यस्यावश्यकत्वात् । २ अवग्रहक-तत्कदया; इ-तत्कदणय । ३ क-गृह्यपरिशिष्टे । ४ र-राभिरांति । ५ इढइअग-कभि । ६ र-ओश्याः ; फङ्ग-ओश्याः । ७ ढअ-वेत । ८ ग-रौरुपायणा । ९ र-यथा । १० र-आमदमि । ११ र-मांडकेया । १२ रङ्फ-यना । १३ फ-स्यार्ष्टिक ।

† इग-यत्र जामदग्न्याः । ¶ यइ-मायो । *र-पाठः ।

कासाः प्राप्तायनाः पैंगलानाद्रो प्रेषयो वाह्यकयो वैश्वानरयो रयो वैहीनरयो विरोहितो वाह्या गोडायणाष्टैकयः काशकृत्स्ना वाद्रूतकाः कृतमागा एतिशायना. सौकृतयो मंटविरत्सौविस्तयः हस्तप्रयो हस्तामेयः शौद्धकयः सौद्वाकयः वैकर्णयः द्रोणजिव्हयः । औरसयः कांवरोद्रयः कंठोरकुद्वैहलविरूपाक्षा मिकाश्वा उच्चैर्मन्यवः वैमत्याः आर्यायणाः मार्केयणा काव्हायनाः वायवाः देवमत्याः आर्केयणाः कांकायना वायानिनः शांकरवश्चांद्रमसाः गांगेया तोयेया याज्ञिया यावतिर्वाहुमित्रायणा आपिशलयः वैष्टवेरेया लोहितायना उष्ट्राक्षा मालायनाः शारद्वतायना राजितवाहाः वासा वात्सा वात्स्यायना इत्येते वत्सास्तेषां पंचार्षेयः प्रवरो 'भार्गवच्यावनानौर्वजामदग्न्येति'।

इति वत्सगणः ।

विदाः शैला अवयः शौलाः प्राचीनयोग्या अभयदानाः कांडरययो वैतभृताः पुलस्तयः आकीयणास्तांत्रायणाः कामला इत्येते विदास्तेषां पंचार्षेयः प्रवरो भवति भार्गवच्यावनाप्नवानौर्वबैद 'इति।

इति विदगणः ।

आपस्तंबस्तु विदगणविशेषमाह स उच्यते । तत्र यस्कगणो वीतहव्यगणत्वेन व्यपदिष्टः । सावेतसेत्यत्र सावेदसेति शुनकगणो गार्त्समदत्वेन व्यपदिष्टः । मित्रयुगणो वाध्र्यश्वगणत्वेन व्यपदिष्टः । विदगणस्तु नोक्तः । कात्यायनेन भृगोर्द्वादशगणा उक्ताः । तद्यथा वात्स्यायनाः आवाच्याः बैजवाः शाठरमाठराः विदाः । आर्ष्टिषेणाः वत्साः वेदविश्वज्योतिषः पार्श्वश्वेताः आपिशायनाः वीतहव्याः गृत्समदाश्चेति । वात्स्यायनानां पंचार्षेया 'भार्गवच्यावनाप्नवानौर्वजामदग्न्येति'। आवाच्यानां 'भार्गवच्यावनावाच्येति' । बैजवानां 'भार्गवच्यावनाप्नवानबैजवनैमथितेति ' । शाठरमाठराणां 'भार्गवशाठरमाठरेति' विदानां 'भार्गवच्यावनाप्नवानेति' । आर्ष्टिषेणानां पूर्वोक्तः। वत्सपुरोधसां 'भार्गवच्यावनाप्नवानवात्सपौरोधसेति'।'भार्गववत्सपौरोधसेति' वा । वेदविश्वज्योतिषाणां 'भार्गववेदवैश्वज्योतिषेति'। पार्श्वश्वेतानां 'भार्गववैन्यपार्थेति'। आपिशायनानां 'भार्गववाध्र्यश्वदैवोदासेति'। वीतहव्यानां 'भार्गववैतहव्यसावेधसेति'। गृत्समदानां 'गार्त्समदेति' । ' भार्गवगार्त्समदेति ' वा ।

लौगाक्षिस्तु सप्तगणेषु विशेषमाह । गणास्तावत् । वत्सा विदा वात्स्या आर्ष्टिषेणाः सालायना वीतहव्या गार्त्समदाश्चेति । तत्र वात्स्यानां पूर्ववत् । विदानां त्र्यार्षेया भार्गवौर्वजामदग्न्येति । वात्स्यानां भार्गवच्यावनाप्नवानेति । आर्ष्टिषेणाना पूर्ववत् । सालायनानां मित्रयुवत् । वीतहव्यानां भार्गववैतहव्यसावेतसेति । एवं पूर्वोक्तेषु वत्सविदार्ष्टिषेणानामन्योन्यमविवाहः । गोत्रप्रवरैक्यात् । यस्कमित्रयुवैन्यशुनकाः परस्परं न विवहेयुः। बौधायनमते प्रवरैक्यात् पूर्वोपपादितप्रकारेण गोत्रैक्याच्च । यस्कादिचतुर्भिर्विदादित्रिभिर्भवत्येव विवाहः । सगोत्रत्वाभावात् । ननु भार्गवरूपैकप्रवरसाम्यात्कथं विवाहः । उच्यते

" पंचानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः । भृग्वंगिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेदिति " बौधायनवचनेन भृगुगणे एकानुवृत्तेरप्रयोजकत्वात् । एवमग्रेऽपि द्रष्टव्यं । इति भार्गवनिर्णयः ।

अथांगिरोनिर्णयः । तत्र तद्गणास्त्रयः । केवलांगिरसो गौतमा भरद्वाजाश्चेति । तत्र केवलां-

---

१ र–वि २ र–म । ३ र–कार्मायण; अइड कार्मायणा । ४ टइअ–लाभायनाः; र–लामायनोः । ५ फ–विवाहयेयुः । ६ फ–आंगिरसा ।

ऽगिरसः षट् । चत्वारो भरद्वाजाः सप्त गौतमा इत्येवं सप्तदश । तत्र केवलांगिरसां षट्गणमध्ये एकः संकृतिर्यौमुण्यायणः तत्तत्प्रकरणे निरूपयिष्यामः । अवशिष्टाः पंच तद्यथा । विष्णुवृद्धकण्व-हरितरथीतरमुद्गलाख्याः । ते उच्यंते । विष्णुवृद्धाः शठमठाः मद्रणाः मद्रणा बादरायणाः -मात्स्यप्रायणाः । सात्यकिः शालंकायना नैतुबाः रतुत्याः भारुण्या वैहोढा देवस्यातयः इत्येते विष्णुवृद्धास्तेषां त्र्यार्षेयः प्रवर 'आंगिरसपौरुकुत्सत्रासदस्यव' इति । इति विष्णुवृद्धगणः ।

कण्वाः औपमयः कठायना वाष्कलाः पौलाः हलिनो मांजिः मांजयः मौजिंगंधा विजिवा जया वाजश्रवस इत्येते कण्वास्तेषां त्र्यार्षेयः प्रवरः ' आंगिरसाजमीढकाण्व ' इति । इति काण्वगणः ।

हरिताः कौत्सः सांख्यो दाभ्यो भैम्यो भैमगवो मलायुर्लवोदरो बलोदरो महोदरो नैमिश्रयो मिश्रोदना मिश्रयः कौतपाः कारीषयः कौलयः पौलयः मौद्गलो माधूपमांधातृमांढकारय इत्येते हरितास्तेषां त्र्यार्षेयः 'आंगिरसांबरीषयौवनाश्व' इति । इति हरितगणः ।

रथीतरा हास्तिदासिका व्हायना नैतिरक्षयः ऐशानयः शैलालयः मिलैमिला मायसा वहवा मैक्षवाहा हेमगवा इत्येते हरितास्तेषां त्रयः प्रवराः ' आंगिरसवैरूपराथीतरेति ' । इति रथीतरगणः ।

मुद्गला हिरण्याक्षा तृक्षक्षिपमामिनाः क्षपासस्याः झपायणाः दीर्घजंघाः प्रबलजंघाः स्तरणमिंदव इत्येते मुद्गलास्तेषा त्रयः प्रवरा ' आंगिरस भार्म्यश्वमौद्गल्येति ' । इति मुद्गलगणः । इति केवलांगिरसः । एषु पंचसु स्वं स्वं गणं हित्वा परस्परं विवाहः । यद्यप्यांगिरसेति प्रवरैक्यं सर्वत्र तथाप्यंगिरोगणत्वाददोषः ।

अथ भरद्वाजांगिरसः । तद्गणाश्चत्वारः । भरद्वाजाः कपयः गर्गा रौक्षायणा इति । ते उक्ता बौधायनेन ' भरद्वाजाः क्षाम्पायणाः मैंगडा देवाश्वाः उद्वहव्याः प्राग्वंशयः वाहलमा वायो गावसानायना वैदेहा आत्राः औक्षाः भूरयः परिणद्धेयाः केशस्तेयाः शौद्ध्यः उरुदाः स्वारिग्विवयः औपसयः वयोक्षिमेदा अग्निवेश्याख्यायाः शठाः गौरिवाः लेखायनाः स्तनकर्णाः ऋक्षा माणिभिंधाः कवोद्का. सौद्धलयो वैला सारुद्धा देवयो माद्र-पययः सौभरः शुंगा देवमतयः इषुमता औदमेघयः प्रवाहणेयाः कुलमाषाः राजस्तंमिः सुधाकृतः वाराहयः वल्मीकयः रुद्रांगपथाः शालाहलयः । वैदवेला न्रत्यायनाः शालालयः शार्दू-लयः शाकला वाष्कलाः सत्यकेयाः क्रोढायनाः कौंडिन्या ब्रह्मस्तंभा राजस्तंभा आपस्तंभा ये चान्ये स्तंभशब्दा आरणसिंधुकौमुदगंधयः शिलायना आत्रेयायणा मामाण्याः कुक्षाः कौकक्षियो नैतुंतयो वार्मयः श्यामेयाः मतसकाथाः कण्णायनाः कारुपथयः कारिणायणाः कांचल्या इत्येते भरद्वाजास्तेषां त्र्यार्षेयः प्रवरः ' आंगिरसबार्हस्पत्यभारद्वाजेति ' । इति भरद्वाजगणः ।

रौक्षायणाः कपिलाः शफिला वैकिढा कौथमोमिजिव्ही च कणिश्च सुनिश्चेति॥ रौक्षायणास्तेषां पंच प्रवराः 'आंगिरसबार्हस्पत्यभारद्वाजवांदनमातवचसेति' । इति रौक्षायणगणः ।

गर्गाः सांभरायणाः सांख्यनायणा गंधरायणा वालुकयो भ्राष्ट्रका भ्राष्ट्रविंदव क्रोष्टकयः सौयामुनिः आजिनाक्षयो होत्रायः सर्प्यायिवयः यवाः नवपलाशाः शासावनयः संमहकुल्याः । वेणुमिरिः सौहमकारिः रौतिकौचाल्याः राजवस्योलबाः इत्येते गर्गास्तेषां पंचप्रवराः ' आंगिरस-बार्हस्पत्यभारद्वाजगार्ग्यसैन्येति ' त्रयो वा ' आंगिरससैन्यगार्ग्येति ' इति गर्गगणः ।

---

१ अइ–सान्यकायना; इर–सांन्यकायना; फ–मार्ग्यंकायना. । २ अइ–सौजिमंघा, ड–सोजि; फ–मौंजि, र–मौजि । ३ र–नुक्षा । ४ फ–र्यं । ५ ह्य–मं । ६ अइडफ–भिंया । ७ अडइरग–ना । ८ अडइ-फर–गत्यापचयः जवा । ९ इडफ–मतय॰, इ–वेजय ।

कपयः वैतलायनानां पतंजलीनां तरस्विनां तौंडिनां भोजसीनां सारंगरवाणां स्वराशिसंहिनां मौशितकिः संशयः पौष्यंय ऐतिशायना इत्येते कपयस्तेषां त्रयः प्रवराः ' आंगिरसामहीयवत्रौ रुक्षयसेति ' । इति कपिगणः । भरद्वाजानां चतुर्णामविवाहः । इति भरद्वाजांगिरसः ।

गौतमांगिरसां सप्त गणाः । आयास्याः शरद्वंताः कौमंडा दीर्घतमसः कारेणुपालयः वामदेव औशनसाश्चेति । त उच्यंते ।

आयास्या आणिवेया मूढरथाः कावाक्षयः वैदेहा कौमारवत्यांस्तौहिर्देभिर्देवकिः सात्यमुग्रि कौशल्या सौम्या नैकरुद्धिस्तैकपिः किरालयः काऊणिः कठोरिः काशीवाः काक्षीवा इत्येते आयास्यास्तेषां त्रयः प्रवरा ' आंगिरसायास्यगौतमेति ' ।

शरद्वंतः अभिजितो रोहिण्याः क्षीरकरमाः सौमुचयः सौयामुनाः कौपबिंदवो राहूगणा गणयोमयणाः इत्येते शरद्वंतास्तेषां त्रिप्रवराः ' आंगिरसगौतमशारद्वंतेति ' ।

कौमांडा मानसंरेषणाः मासुराक्षाः काण्वरेभयः आंजायना वाजायना इत्येते कौमांडा स्तेषां पंचार्षेयः ' आंगिरसौचथ्यकाक्षीवतगौतमकौमंडेति ' । दीर्घतमसां पंच 'आंगिरसौचथ्य काक्षीवतगौतमदैर्घतमसेति ' ।

कारेणुपालयो वास्तव्याः श्वेतीयाः पौजिष्ठ्यः औदजायना माधुक्षारा अजगंधय इत्येते कारेणुपालयस्तेषां त्रिप्रवराः ' आंगिरसगौतमकारेणुपालेत ' । वामदेवानां त्रयः 'आंगिरसगौतमवामदेवेति ' ।

औशनसोर्दिष्या महस्तासुरूपाक्षा महोदरा विकंहताःसुबध्या निहता इत्येते औशनसास्तेषां त्र्यार्षेया ' आंगिरसगौतमौशनसेति ' । गौतमानां सप्तानामविवाहः ॥ इति गौतमांगिरसः ॥ }

अथ विश्वामित्रास्तेषां गणा दश । कुशिकरोहितरौक्षककामकायनकचघनंजयआजअघमर्षणपूर्णेंद्रकौशिकाख्याः । त उच्यंते ।

कुशिकाः पार्णजंघा वालुक्या औदरिर्माणिर्बृहदग्निरालवराघहिरापयव्याः कामैतकाबद्धकथाश्चिकिताः कामकायनाः शांकायनाः यमदूता आनतिज्ञास्तारकायणाश्चावासा जावालयो वयाज्ञवल्क्या विदंडा भुवनयनाः सौश्रुतय औपदहनयः औदुंबरिर्भ्राष्ट्रेयाः श्यामेया श्रौत्रेयासाश्वता मयूराश्चित्रे भापना अनुतंतवो मांतवो ये चान्ये वतशब्दाः बाभ्रव्याः कालोत्सरा इत्येते कुशिकास्तेषां त्रिप्रवराः ' वैश्वामित्रदेवरातऔदलेति ' ।

रोहितादंडकयश्चाक्रवर्मापिणा जईयिणा वांजायना वासय इत्येते रोहितास्तेषां त्रयः ' वैश्वामित्राष्टकरोहितेति ' । रौक्षकाः सोदहा वलारेवणाश्च तेषां त्रयः 'वैश्वामित्ररौक्षकरैवणेति ' । वैश्वामित्रदेवश्रवसदेवतरस औमनज्याः कामकायनास्तेषां त्रयः ' वैश्वामित्रदेवश्रवसदेवतरसेति' ।

कताः सौरंधाकरभावाजयनाः शिशिराः कौकुट्टम्या पिंडियावा नारायणा नाराया इत्येते कतास्तेषां त्रयः ' वैश्वामित्रकात्याक्कीलेति ' ।

धनंजयाः पारिजामयः आश्रयेना वायव्याः सैंधवा यमयः पुष्कराक्षास्तेषां त्रयः ' वैश्वामित्रमाधुछंदसधानंजयेति ' । आजानां त्रयः ' वैश्वामित्रमाधुछंदस आजेति ' । अघमर्षणाः कौशिकास्तेषां त्रयो ' वैश्वामित्राघमर्षणकौशिकेति ' । पूरणा वारिधापयस्तेषां द्वौ ' वैश्वामित्रपौरणेति ' । इंद्रकौशिकानां द्वौ ' वैश्वामित्रेंद्रकौशिकेति ' । सर्वेषां वैश्वामित्राणामविवाहः ।

१ र–न्ते । २ अइडझ–अं । ३ फ–मां । ४ अडइफ–सा ।

अथात्रयश्चतुर्भेदा आत्रेयाः वाद्भूतका गविष्ठिरा मुद्गलाश्चेति । त उच्यंते । मूरयः छांदिछांदोगिगौष्ठिका मौद्गलयः सोपानच्छगलाः छागलास्तृणबिंदुर्भार्गतयो मालरूचः व्याळयः सांमव्यायनाः सार्वेव्यायनाः कर्मर्थीयाः कामप्यायनिः दाक्षिवैदेहाः गणपतयः औद्दालकिद्रोणाभावा गौरिग्रीवयो गाविष्ठिरः शिशुपालाः कृष्णात्रेया गौरात्रेया तृणात्रेया अरुणात्रेयाः नीरात्रेया श्वेतात्रेया श्यामात्रेया महात्रेया आत्रेया दत्तेत्रेया महात्रेया गालेया वायेयाः शौभ्रेया वामरथीना वैतभावा शौद्रयाः कौद्रेयाः गोपवनाः कालापयवयः । आनीलायना आमीशायना आनंदिर्मानंदिर्गौरिंदिःसैरंदिर्देरंदिःपुष्पयः शेफयः साकेतायना शाकटायना भरद्वाजनय इंद्रातिथिरित्येतेऽत्रयस्तेषां त्रयः प्रवराः 'आत्रेयार्चनानसश्यावाश्वेति'।वाद्भूतकानां त्रयः'आत्रेयार्चनानसवाद्भूतक' इति । गविष्ठिराणां त्रयः 'आत्रेयार्चनानसगविष्ठिरेति' ।

मुद्गला व्यालिसंधिर्णेवा बौधाक्षा वाजकिर्मिविष्ठिराः शिरीषयः शालिमता व्रीहिमता गौरितो गौरवयो वायवना बाष्कला इत्येते मुद्गलास्तेषां त्रयः प्रवराः 'आत्रेयार्चनानसपौर्वातिथेति'। अत्रीणां सर्वेषामविवाहः । इत्यत्र निर्णीताः ।

अथ वसिष्ठास्तेषां च वारो गणा आद्यवसिष्ठाः कुंडिना उपमन्यवः पराशराश्चेति।ते उच्यंते। वैतलकिर्वाटारकिःसारवला गौरिश्रवसः आश्वलायनाः कपिष्ठाः शौविर्वृक्षाः व्याघ्रपादो बाह्यकायनिर्गायनिर्वाढव्या जातूकर्ण्या औडुलोमिःकौमोजिः कौलायनाः सुंदहरितःकांडवृद्धिः सौवत्सायना आलंभायना लोमन्यः स्वस्तोकर्षिताः पार्णकायनाः पार्णवल्को देवलका नव्या विश्वावना वाहुकयः आविक्षिपयः वंश्यजपयः पूर्वविलाविशिखा इत्येते वसिष्ठास्तेषामेकः प्रवरो वासिष्ठेति ।

कुंडिना होलायना गौणा आश्वत्था वैकर्णेय आबिल्वा बदरा आश्मरथ्या वाहवः कौंडोदयाः सांगलिनः कापठवः पेटका नवग्रामाः हिरण्याक्षाः पैष्टाः पैप्पलादयः माध्यंदिनाः शांतिसौपाक्षिरितिकुंडिनास्तेषां त्रयः प्रवराः 'वासिष्ठमैत्रावरुणकौंडिन्येति' ।

उपमन्यव औपगवा मांडलेखयः कापिंजलाः जलागृहास्तपोलोकास्त्रैणा सर्वेषास्तागुरिः स्वराक्षरा मौलयश्चेळहालिनो महाकर्णायना बालशिखा औदाहमानयश्चलायना मांगुरिः रथायना कुंडोदरायणाःकाबाधयो शाकौश्वयः आनुक्षरवः आललवाः कपिकेशा इत्येते उपमन्यवस्तेषां त्रयः प्रवराः 'वासिष्ठेंद्रप्रमदाभरद्वसेति' ।

पराशराः कंडुशयो वाजयो वाजिमंतयः । वैमतायना गोबालिः प्ररोहयो वैकलयः ख्याक्षयः कौमुदाद्यो हार्यश्विसल्यायना गोपायनाः इपातयः । आरुणिर्वारुणिर्मौलुकया वाजरिश्वकाव्हयनाः क्रौकलयः कैमतिः कृष्णाजिनाः कपिमुखाः स्वस्त्यापनयः श्वेतयूपयः पौष्कलासाविगौग्यायनयो वार्णयः ख्यातेयाः श्लौनुहिः सहार्येलिस्तेषा त्र्यार्षेयः 'वासिष्ठशाक्त्यपाराशर्येति'। अत्र गौबाल्यंताः कृष्णाः पराशरा हार्यश्वंता गौराः वारुण्यंता अरुणाः केमत्यंता नीलाः पौष्कलसाद्यंताः श्वेताः सहचोल्यंताः श्यामा इति संज्ञा । वासिष्ठानां सर्वेषां परस्परमविवाहः । आपस्तंबस्तु आद्यवसिष्ठानामपि वासिष्ठशाक्त्यपाराशर्येतित्रिप्रवरानप्याह

अथ कश्यपास्तेषां त्रयो गणा निध्रुवा रेभाः शांडिलाश्चेति । तं उच्यंते । कश्यपाः छागलेया माठरा ऐतिशायना आभूत्याः वैशिखा भूम्रायणाः सौम्यधर्म्यायणा औदवृत्तिरायणाः

---

१ र–वा । २ अडइ–शौविरक्षा; इफग–शौचि । ३ अफडइन–र; र–द । ४ इ–सुंदरा । ५ ग–स्वस्त्या । ६ फ–तत्र उच्यते ।

पैंधकयः प्रावर्या हद्रोगा आनथैाः पांचापतिका मोर्पीतांकिः सगसयोंसाममया मार्चसारावयः सौधवयः सापस्या आसुरायणाः छागव्याः सोंमघाः स्थौलकेशयः वार्द्धकयः औपव्याः लाक्षायणाः क्रोष्टाः जीवनयः सार्द्रायना रोहितायना मितकुंभाः पिंगाक्षय ओडलयः मारयणा पचयः वैकर्णेयाः कौषेनकेयाः धूमलक्ष्मणयः सुरा गौरिवायनाः विमथ्याः अग्निशमीलायना औक्षायनय' कांबोदरयः देवरातो वेदूराः वावेला महावक्रेयाः पैठीनस्याः पानस्या वृषगणाः दाक्षमाणयः भालंदनाः शांखमित्रेया हिरण्मय वाला जारमण्योरमाणि सावित्रवसौ वैशंपायनाः स्वैरकिः कांसलयः उल्कायनिर्मार्जलायनाः कांसलायनाः देर्वोहोताः सूचयः स्वरेभायस्थूणा मागुरयः पार्थिकोया गोपायना हिरण्मया आग्निदेविस्तथ्यशौर्या मुसला आविश्रेण्या उत्तरोगंडूयाः दूला मंत्रिताः वैकर्णयः स्थूलबिंदव इत्येते निध्रुवास्तेषां त्रयः प्रवराः 'काश्यपावत्सारनैध्रुवेति'। रेभाणां त्रयः काश्यपावत्साररैभ्येति ।

शांडिलाः कौहेलाः पार्यकावायका औदमेघयः सौदानवः सोपवसः । कारेयाः कौकटेयः शैशिरेयः माहकयवहोदकयः कोषयो मौंजायना जाणवंशाः स्वर्गमानया गांगायना 'वात्समौलय' गोभिलेविदायना वात्ययना बहूदरयः मागुरिर्गार्दभिमुखाहिरण्यकहिस्ते दहा गोमूत्रा वाक्यशठा जालंधरधिनंतरिरित्येते शांडिलास्तेषां त्रयः प्रवराः 'काश्यपावत्सार-शाण्डिल्येति' ॥ १ ॥ 'काश्यपावत्सारदैवलेति' वा ॥ २ ॥ 'काश्यपावत्सारासितेति' वा ॥ ३ ॥ 'शांडिल्यासितदेवलेति' वा ॥ ४ ॥ 'काश्यपासितदेवलेति' वा ॥

आपस्तंबसूत्रे निध्रुवस्थाने निरुपपदाः कश्यपा उक्ताः । "रेभशांडिलास्तु त्र्यार्षेयाद्ध्यार्षेया वा देवलासितेति । काश्यपदेवलासितेति" । कश्यपानां सर्वेषामविवाहः ।

॥ इति कश्यपनिर्णयः ॥

अथागस्तयः । ते त्रयः । आद्यागस्तयः सांभवाहाः सोमवाहाश्चेति । त उच्यंते । अगस्तयो विशालाद्याः कालार्यना औदहनयः कुल्माषदंडिनोः पर्णार्थ्यः सावर्णिर्वत्रदयो वैरणयो बुधोद्रयः सौचरययः शाल्पातया मौंजिकराः शत्रयो ह्वयोमाः शांडिधाराः पयोद्भताः हारिग्रीवा रौहिण्या मौसलय इत्येते अगस्तयस्तेषां त्रयः प्रवरा 'आगस्त्यदार्ढ्यच्युतेध्मवाहेति'। अन्यत्र तु चत्वार उक्ताः । 'इध्मवाहाः सांभवाहाः सोमवाहा यज्ञवाहाश्चेति'। इध्मवाहानां त्रयः 'आगस्त्यदार्ढ्यच्युते-ध्मवाहेति' । सांभवाहानामागस्त्यदार्ढ्यच्युतसांभवाहेति । सोमवाहानामागस्त्यदार्ढ्यच्युतसोम-वाहेति । यज्ञवाहानामागस्त्यदार्ढ्यच्युतेध्मवाहेति । कात्यायनलौगाक्षिभ्यामगस्तिगणमध्ये पुलस्त्यः पुलहः क्रतुरित्यायुक्त्वा 'आगस्त्यमाहेंद्रमायोभुवेति'प्रवरा उक्ताः । ततः पूरणादीनुक्त्वा 'आगस्त्यपौर्णमासपौरणेति' प्रवराउक्ताः। सत्याषाढस्तु आद्यागस्तीननुक्रम्य 'आगस्त्यदार्ढ्यच्युते-ध्मवाहेति' त्रीन् प्रवरानुक्त्वा सांभवाहेति वेत्येकप्रवरमप्यूचिवान् । अगस्तीनां सर्वेषामविवाहः ।

॥ इत्यगस्त्यनिर्णयः ॥

---

१ अफदइ–आतफद; र–आतवा । २ अइ–मरासया । ३ अ–य; इ–ध । ४ इ–स्तो; ड–स्ता । ५ अइर–स्थोल । ६ फ–ले । ७ अइड–सौ । ८ अ–दैवोहोता, डइ–देवोहौता । ९ र–र्थि, अइ–काका । १० फ–कौशरला । ११ अइड–पार्यकार्यवाका । १२ अइर–र । १३ र–शो ॥ १४ अइर–भादयः । १५ र–वि । १६ अड–तेति । १७ र–थेति । १८ ड–भाल्कायना । १९ अरइडफ–स्त्रः । २० अ–पार्णा दइ–पार्णे ।

अथ द्व्यामुष्यायणाः । तत्र भरद्वाजानां केवलांगिरसामत्रीणां कश्यपानां वसिष्ठानां विश्वामित्राणां च द्व्यामुष्यायणा नान्येषां त उच्यंते । तत्र संकृतिगणीनां द्व्यामुष्यायणाः । ते यथा । संकृतयो मेलकाः पौलास्ताडिर्बभुशैवगवाः परिभवास्तारका व्याहिग्रीवा ऐतरेयाः पैणायाः आरायणा आश्वलायनाः श्रौतायना आमायणा आर्षभयश्चांद्रायणा आग्नायपः पूतिमाषा इत्येते संकृतयस्तेषां त्र्यार्षेय 'आंगिरससांकृत्यगौरवीतेति' । आश्वलायनस्तु शाक्त्यगौरवीतसांकृत्येति प्रवरानाह । *दंते संकृतयेः कात्यायन लौगाक्षित्रैघायनाश्वलायनो केवलांगिरोगणेषु पाठात् प्रवरेषु च वसिष्ठवश्यस्य शक्तेरांगिरसमविधेर्वसिष्ठैः सवैकस्य शक्तेसवत्योत्पादक तथा तु वृत्तिः सगोत्रत्वाद्विवाहः । एतैः पूर्वोक्तैः परस्परं चतुर्विधवसिष्ठैश्च सह न विवाहः ।

चतुर्विंशतिटीकायां तु कश्यपैस्त्रिभिरविवाह इत्युक्तं । श्लोकोऽप्युक्तः

" काश्यपेयगणस्यापि वसिष्ठस्य गणस्य च । संकृतिपूतिमाषाभ्यां विवाहो न परस्परमिति " ॥

तन्नाकरो मृग्यः । लौगाक्षीणां त्रयः प्रवराः 'काश्यपावत्सारवासिष्ठेति' । एषां वासिष्ठकश्यपैरविवाहः । तथा धनंजयानां विश्वामित्रात्रिभिरविवाहः । एवं वामरथानां जातूकर्ण्यानां वसिष्ठात्रिभिरविवाहः । विश्वामित्रभरद्वाजैः शौंगशैशिरीणां न विवाहः । अस्य प्रवराः । 'आंगिरसबार्हस्पत्यभारद्वाजकात्यात्कीलेति' । क्वचित्तु देवरातेन विश्वामित्रजमदग्निभिः सह न विवाह इत्युक्तं । तत्र केषांचित्काशीस्थानामनादरः । विपरीतानुष्ठानात् । दक्षिणदेशे तु न कुर्वंति ।

प्रयोगपारिजाते संग्रहे

" जमदग्निगणस्यापि विश्वामित्रगणस्य च । न देवरातगोत्रेण विवाहः स्यात्परस्परम् " ॥ इति ।

हरिवंशे तु

" और्वस्यैवमृचीकस्य सत्यवत्यां महायशाः । जमदग्निस्तपोवीर्यो जज्ञे ब्रम्हविदां वरः " ॥

" मध्यमश्च शुनःशेपः शुनःपुच्छः कनिष्ठकम्" । इत्युक्त्वा

" देवैर्दत्तः शुनःशेपो विश्वामित्राय भार्गवः । देवैर्दत्तः स वैयस्माद्देवरातस्ततोऽभवदिति" । देवरातस्य जमदग्निसंबंधकथनाज्जामदग्न्यत्वमुक्तं । तन्मूलं मृग्यं । इति द्व्यामुष्यायणाः ।

यत्तु 'मानवेति वा सर्वेषामिति' प्रवर उक्तः सवरणे न तु विवाहादौ तस्योपयोगः । राजन्यवैश्यानां समानार्षेयत्वादिकं पुरोहितगोत्रादिभिर्विचारणीयं ।

अथ कश्चिद्विशेषो मृग्यमूलोऽपि लिख्यते । शौंगशैशिरीणां पंचोक्ताः । 'आंगिरसबार्हस्पत्यभारद्वाजशौंशिरेति' वा । त्रयो वा । 'आंगिरसकात्यात्कीलेति' । 'भारद्वाजकात्यात्कीलेति' वा । कपिलानामांगिरसबार्हस्पत्यभारद्वाजवांदनमातवचसेति ।

एषां विश्वामित्रभरद्वाजैर्नान्वयः । धनंजयानां वैश्वामित्रमाधुछंदसधानंजयेति एषामात्रिविश्वामित्रैर्नान्वयः । लौगाक्षीणां काश्यपावत्सारवासिष्ठेति । वासिष्ठावत्सारकाश्यपेति वा । एषां वासिष्ठकाश्यपैरविवाहः । यस्य विस्मरणादिना गोत्रं । नाशस्तस्य काश्यपगोत्रं " गोत्रनाशे तु काश्यपमिति " हेमाद्रौ व्याघ्रोक्तेः ।

अथात्र स्मृत्यर्थसारीयाः श्लोकाः संग्रहार्थं लिख्यन्ते

" अथात्र गोत्रप्रवरनिर्णयो वर्ण्यतेऽञसा । जमदग्निभरद्वाजविश्वामित्रात्रिगौतमाः ॥ १ ॥

" वसिष्ठकश्यपागस्त्या मुनयो गोत्रकारिणः । एतेषां यान्यपत्यानि तानि गोत्राणि मन्वते ॥ २ ॥

---

१ फ-मुनयः । २ फ-गोत्र । ३ र-गणो । ४ अड्ड-व्यासारिमीका; र-व्याहादि । ५ र-औ । ६ ड्स-रि । * र-पाठः । ७ ग-चा । ८ फ-मेजर्याः; ड्स-सारस्य ।

" म्रियमाणतया वाऽपि सत्तया वाऽनुवर्त्तनं । एकस्य दृश्यते यत्र तद्गोत्रं तस्य कथ्यते ॥ ३ ॥
" समानमुनिभूयस्त्वं एकप्रवरतामपि । समानप्रवरत्वं च द्वेधा बोधायनोऽब्रवीत् ॥ ४ ॥
" मुनिप्रणीतप्रवरैरूनपंचाशतावयं । अनंतान्यपि गोत्राणि चांगीकृत्याभिदध्महे ॥ ५ ॥
" जामदग्न्यौ वत्सविदा वार्ष्टिषेणाः परस्परं । नान्वियुः प्रवरैक्येन सगोत्रत्वेन चादिमौ ॥ ६ ॥
" यस्का मित्रयुवो वैन्याः शुनकाः प्रवरैक्यतः । स्वं स्वं हित्वा गणं सर्वे विवहेयुः परावरैः ॥७॥
" उक्ताः सप्त भृगोर्वंशा वक्ष्यंतेऽगिरसो गणाः । गौतमाः सप्त चायास्याः शरद्वंतास्त्यापरे ॥ ८ ॥
" कौमांडा दीर्घतमसस्ततः कारेणुपालयः । वामदेवा औशनसा गोत्रैक्यात्रान्वियुर्मिथः ॥ ९ ॥
" केवलांगिरसाश्चैके विष्णुवृद्धाः सकण्वजाः । हरिता रथीतराश्च मुद्गलाः प्रवरैक्यतः ॥ १० ॥
" स्वं स्वं हित्वा गणं सर्वे विवहेयुः परावरैः । षोडशांगिरसस्त्रेधा प्रोक्ताः संकृतयस्तथा ॥११॥
" संकृतीनां द्विवंश्यत्वाद्वासिष्ठैश्च चतुर्विधैः । स्ववर्गीयैः सगोत्रत्वात्प्रवरैक्याच्च नान्वियुः ॥ १२ ॥
" चत्वारो त्रय आद्या त्रि वाद्भूतकमविष्टिराः।मुद्गलाश्चेति गोत्रैक्यात्प्रवरैक्याच्च नान्वियुः॥१३॥
" त्रयश्च कश्यपगणा निध्रुवा रेमशंडिलाः । गोत्रैक्यात्प्रवरैक्याच्च नोद्वहेयुः परस्परं ॥ १४ ॥
" वासिष्ठैः कश्यपैर्नित्यं लौगाक्षीणामनन्वयः । अहर्वसिष्ठतोकिस्तु प्रयाजाद्यादिगोचरा ॥ १५॥
" वसिष्ठाः कुंडिनाश्चैवमुपमन्युपराशराः । वसिष्ठा इति चत्वारो गोत्रैक्यान्नान्वियुर्मिथः ॥ १६ ॥
" कुशिका रोहितगणा रौक्षकाकामकायनाः । कता धनंजया आजा अघमर्षणपूरणाः ॥ १६ ॥
" इंद्रकौशिकजाश्चेति विश्वामित्रगणा दश । नोद्वहेयुः सगोत्रत्वात्क्वचिच्च प्रवरैक्यतः ॥ १८ ।
" अगस्तयः सोमवाहाः सोमवाहा इति त्रयः । गोत्रैक्यात्प्रवरैक्याच्च नोद्वहेयुः परस्परं ॥ १९ ।
" वर्गा एकोनपंचाशत्प्रसिद्धा मुनिभिः स्मृताः । अप्रसिद्धाः परे वंश्या अंतर्भूता इहैव ते ॥२०।
" विश्वामित्रात्रिगोत्रेण नोद्वहेयुर्धनंजयाः । अत्रेस्तु पुत्रिकापुत्रा वामरथ्यादयस्तथा ॥ २१ ॥
" तथैव जातुकर्ण्याश्च वसिष्ठैरत्रिभिः सह । भरद्वाजेन शुंगेन विश्वामित्रस्य शैशिरैः । २२ ॥
" क्षेत्रे जातो द्विगोत्रोयं प्रोच्यते शौंगशैशिरिः । विश्वामित्रभरद्वाजैस्तज्जानां तेन नान्वयः ।२३
" कपिलानां भरद्वाजैर्विश्वामित्रैश्च नान्वयः । गुरोः सगोत्रप्रवरा नोद्वाह्या क्षत्रविट्गणैः ॥ २४ ।
" सगोत्राद्यनभिज्ञैश्च विप्रैराचार्यगोत्रजाः । दानादिनाऽन्यगोत्राः स्युरज्ञातगुरुगोत्रिणः ॥ २५ ।
" समानप्रवरोद्वाहनिषेधः क्षत्रवैश्ययोः । प्रवरान्मानवेत्यस्मात्प्रवराचान्यगोचरः ॥ २६ ॥
" इत्थं सगोत्रसंबंधविवाहविषये स्थिते । यदि कश्चिज्ज्ञानतस्तां कन्यामूढ्वोपगच्छति ॥ २७ ॥
" गुरुतल्पव्रतान्छुद्ध्येद्गर्भस्तज्जोऽन्यतो व्रजेत् । भोगतस्तां परित्यज्य पालयेज्जननीमिव ॥ २८

अत्र प्रायश्चित्तप्रपंचः प्रायश्चित्तमयूखे वक्ष्यते

" जामदग्न्या वत्सविदा आर्ष्टिषेणास्तथैव च । पंचावर्त्तिन एवैते अन्ये चतुरवर्त्तिनः ॥ २९

अर्थतः पूर्वमेव व्याख्यातानि पद्यानि। इह प्रायश्चित्तमुक्तं मदनरत्नपारिजातके शातातपेन

" परिणीय सगोत्रां तु समानप्रवरां तथा । त्यागं कृत्वा द्विजस्तस्यास्ततश्चांद्रायणं चरेत् ॥

आपस्तम्बः

" समानगोत्रप्रवरां कन्यामूढ्वोपगम्य च । तस्यामुत्पाद्य चंडालं ब्राह्मण्यादेव हीयते ।
"परिणीय सगोत्रां तु समानप्रवरां तथा । त्यागं कृत्वा द्विजस्तस्यास्ततश्चांद्रायणं चरेत् ॥

---

१ ए-मया। २ अबफ-वर्गा। ३ फइ-नान्वयु। ४ इफ-नान्वयः। ५ इ-अई। ६ ए-तिनः।

"समानप्रवरां कन्यामेकगोत्रामथापि वा । विवाहयति यो मूढस्तस्य वक्ष्यामि निष्कृतिम् ।
"उत्सृज्य तां ततो भार्यां मातृवत्परिपालयेत्" । अत्र प्रमादेन परिणयनमात्रे चांद्रायणं । इह कपिलानामित्यर्द्धं प्रक्षिप्तमिति टीकाकृतः । अत्र गोत्रप्रवरनिर्णये बहुवक्तव्यमप्युपयोगाभावा-[1]द्विस्तृतिभयाच्च नोक्तं । विचारबाहुल्यजिज्ञासुना द्वैतनिर्णये द्रष्टव्यं । इति कन्यालक्षणादि ।

एतानेव धर्मान्वरेऽतिदिशति याज्ञवल्क्यः ( आ. ५५ )
"एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः । यत्नात्परीक्षितः पुंस्त्वे युवा धीमान् जनप्रियः" इति ।
अत्र भ्रातृमदनन्यपूर्वयवीयस्त्वरूपगुणत्रयभिन्नाः सर्वे गुणा अतिदिश्यंते । सवर्ण उत्तमवर्णो वा । असपिंडादिगुणातिदेशादुभयतः सापिंड्यनिवृत्तिरभिप्रेता । तेन वरनिरूपितं कन्यायां कन्यानिरूपितं च वरे पृथगेव सापिंड्यं न तु व्यासज्यवृत्ति उभयनिरूपितमेकमिति पितामहचरणाः ।
[1]पुंस्त्वपरीक्षोक्ता नारदेन ( १२।१० )
"यस्याप्सु प्लवते बीजं ह्लादि मूत्रं च फेनिलं । पुमान् स्याल्लक्षणैरेतैर्विपरीतस्तु षंढक" ॥ इति ।
गृह्ये बुद्धिमते कन्यां प्रयच्छेदिति यमोऽप्याह
"कुलं च शीलं च वपुर्वयश्च विद्यां च वित्तं च सनाथतां च ।
"एतान्गुणान्सप्त परीक्ष्य देया कन्या बुधैः शेषमचिंतनीयमिति" ॥
सामुद्रिके । "पूर्वमायुः परीक्षेत पश्चाल्लक्षणमादिशेत् । आयुर्हीननराणां हि लक्षणैः किंप्रयोजनमिति" । अन्यानि सामुद्रिकलक्षणानि विस्तरभियान्नोक्तानि । इति वरगुणाः ॥

अथ विवाहक्रमः । याज्ञवल्क्यः ( आ. ५७ )
"तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमं । ब्राह्मणक्षत्रियविशां भार्या स्वा शूद्रजन्मनः" ॥
तिस्र इत्यादिसंख्या सवर्णाव्यतिरेकेण । मनुः ( ३।१२ )
"सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि । कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः" ॥
अत्र प्रांचः । रतिपुत्रधर्मार्थत्वेन विवाहस्त्रिविधः । पुत्रार्थो द्विविधः । नित्यः काम्यश्च । अपुत्रस्य यः सुतार्थं विवाहः स नित्यः । एकस्मिन्पुत्रे जाते बहुपुत्रोत्पादनार्थं यो विवाहः स काम्यः । स तत्र नित्ये सवर्णैव काम्यपुत्रोत्पादने शूद्राव्यतिरिक्ताः । रत्यर्थमनाश्रमित्वदोषपरिहारार्थं वा शूद्राऽपि परिणेया । न तु पुत्रोत्पत्त्युद्देशेन ।
"यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः । नैतन्मम मतं यस्मात्तत्रात्मा जायते स्वयमिति*" ॥ हेत्वभिधानात् । न चैवं शूद्रापुत्रस्य विभागो न संगच्छत इति वाच्यं । रत्यर्थं प्रवृत्तस्यानुषंगेण पुत्रे जाते वचनस्यार्थवत्वात् । यदि नित्यपुत्रोत्पादनार्थे सवर्णा न लभ्यते तदाऽनुकल्पार्थमप्यसवर्णापरिणयनमित्याहुः । विशेष उक्तो याज्ञवल्क्येन ( आ. ६२ )
"पाणिग्राह्यः सवर्णासु गृह्णीयात्क्षत्रिया शरं । वैश्या प्रतोदमादद्याद्वेदने त्वग्रजन्मन" ॥ इति ।
तथा "वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने" इति च । अत्र जन्मग्रहणेन उत्तमवर्णग्रहणं । वैश्यायाः क्षत्रियेण सह विवाहे प्रतोद एव ।

इति विवाहक्रमः

"अथ विवाहभेदाः । तत्र विवाहशब्दः कन्या पितरं प्रति दानं "अलंकृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाह" इति सूत्रोत ( आश्व. १।६।१ ) । दानविवाहशब्दयोः सामानाधिकरण्यात् ।

---

१ अह–शादान्–र–श्रुतेः । * या. व. आ. ५६

वरं प्रति पाणिग्रहणादि । अन्यथा "उपनयन आपूर्यमाणपक्षे कल्याणनक्षत्रे चौलकर्मोपनयनगोदानविवाहाः । सार्वकालमेके विवाहः । तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयात् ' इत्याश्वलायनेन (१।४।१-२) । विवाहात्पूर्वं होम उक्तोऽसंगतः स्यात् । न हि कन्यादानात्पुरस्तादेता आहुतयः सन्ति । मनुः ( ३।२१ )

" ब्राह्मो दैवस्तथा चार्षः प्राजापत्यस्तथासुरः । गांधर्वो राक्षसश्चैव पैशाचस्त्वष्टमः स्मृत" ॥ इति तत्र क्रमेणैवाष्टानां स्वरूपं फलं चाहाश्वलायनः ( १।६।१ ) अलंकृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहस्तस्यां जातो द्वादशावरान् द्वादशपरान् पुनात्युभयतो ऋत्विजे वितते कर्मणि दद्यादलंकृत्य स दैवो दशावरान् दश परान्पुनात्युभयतः ' सह धर्मं चरत ' इति प्राजापत्योऽष्टावरानष्ट परान्पुनात्युभयतो गोमिथुनं दत्वोपयच्छेत स आर्षः । सप्तावरान्सप्त परान्पुनात्युभयतो मिथः समयं कृत्वोपयच्छेत स गांधर्वो धनेनोपतोष्योपयच्छेत स आसुरः । सुप्तानां प्रमत्तानां वाऽपहरेत्स पैशाचो हत्वा भित्वा च शीर्षाणि रुदंतीं रुदद्भ्योऽपहरेत्स राक्षस" इति । एतेषु गुणदोषानाह मनुः ( ३।३९;४१ )

" ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः । ब्रह्मवर्चस्विनः पुत्रा जायंते शिष्टसंमताः ॥

" इतरेष्ववशिष्टेषु नृशंसानृतवादिनः । जायंते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः" ॥ नृशंसा हिंस्राः । ब्रह्मद्विषो वेदद्विषः । गांधर्वादिष्वनंतरं होमादिकर्मापि कार्यं । तद्विना भार्यात्वानुत्पत्तेः । तथाह देवलः

" गांधर्वादिविवाहेषु पुनर्वैवाहिको विधिः । कर्त्तव्यश्च त्रिभिर्वर्णैः समर्थेनाग्निसाक्षिकः " ॥

वसिष्ठोऽपि ( १७।७२ )

" बलादपहृता कन्या मंत्रैर्यदि न संस्कृता । अन्यस्मै विधिवद्देया यथा कन्या तथैव सा " ॥

अत्र व्यवस्थामाह मनुः ( ३।२४ )

" चतुरो ब्राह्मणस्याद्यान्प्रशस्तान्कवयो विदुः । राक्षसं क्षत्रियस्यैवमासुरं वैश्यशूद्रयोरिति " ॥

राक्षसः क्षत्रियस्य मुख्यः । आसुरो वैश्यशूद्रयोर्मुख्यः । अनुकल्पमाह स एव ( ३।२३ )

" षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान् । विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान्" ॥ इति । अस्यार्थः । ब्राह्मणस्य ब्राह्माद्या गांधर्वांताः षडेव नेतरौ । एवं च क्षत्रियादेर्ब्राह्माद्यनुज्ञा । आसुरादयश्चत्वारः क्षत्रियस्य धर्मा वैश्यशूद्रयोरपि राक्षसवर्जमेत एव । एवं च राक्षसः क्षत्रियस्यैव । ब्राह्मणस्य षट् नेतरौ । क्षत्रियस्य सर्वे । आसुरं निंदति काश्यपः

"क्रीता द्रव्येण या नारी न सा पत्नी विधीयते । न सा दैवे न सा पित्र्ये दासीं तां कवयो विदुरिति" ॥

यमः

" कन्याविक्रयिणो मूढा रहः किल्बिषकारिणः । पतंति नरके घोरे घ्नंत्या सप्तमं कुलमिति " ॥

एतच्चात्मार्थधनग्रहणे । कन्यार्थे तु न दोषः । यथाह मनुः ( ३।५४ )

" यासां नाददते शुल्कं ज्ञातयो न स विक्रयः । अर्हणं तत्कुमारीणामानृशंस्यं तु केवलं " ॥

आनृशंस्यमपापित्वं । ब्राह्मणस्यापि पैशाचमनुजानाति वत्सः

" सर्वोपायैरसाध्या स्यात्सुकन्या पुरुषस्य या । चौरेणापि विवाहेन सा विवाह्या रहःस्थितेति " ॥

विवाहमध्ये स्त्रीणां रजोदर्शने विशेषमाह यज्ञपार्श्वः

१ गह्वर-थि ।

"विवाहे वितते तंत्रे होमकाल उपस्थिते । कन्यायां ऋतुरागच्छेत्कथं कुर्वंति याज्ञिकाः ॥
"स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि । युंजानामाहुतिं हुत्वा ततस्तंत्रं प्रवर्त्तयेदिति"॥

इति विवाहभेदः ॥

अथ कालः । तत्र गृह्यं ( आश्व. गृ. १।४।१ ) "उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहा" इति। यत्तु "सार्वकालमेके विवाहमिति" तद्दक्षिणायनप्राप्त्यर्थमिति धर्मप्रकाशे पितामहचरणाः । *आसुरादिविवाहविषयमिति केचित् ।

नारदः
"माघफाल्गुनवैशाखज्येष्ठमासाः शुभप्रदाः । मध्यमः कार्त्तिको मार्गशीर्षका निंदिताः परे ॥
"न कदाचिद्दशर्क्षेषु भानोरार्द्राप्रवेशनात् । विवाहं देवतानां च प्रतिष्ठां नोपनायनं" ॥
अत्र यद्यपि शेषा निंदितास्तथापि भानोरार्द्राप्रवेशनादिति पुनः श्रुत्याऽऽषाढोऽभ्यनुज्ञातः । स चार्द्राप्रवेशनात्पूर्वमिति । अत्र च विधिनिषेधाः सौरमानाभिप्रायेण । यथोक्तं गर्गेण
"सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृत" इति । अतः कश्यपेन चांद्रमानमप्युक्तं
"उपवासव्रतोद्वाहयात्राक्षौरोपनायनं । तिथिवर्षादि निखिलं चांद्रमानेन गृह्यत" इति ।

मदनरत्ने मिहिरः
"ज्येष्ठस्य ज्येष्ठकन्याया विवाहो न प्रशस्यते । तयोरन्यतरे ज्येष्ठे ज्येष्ठमासो न शस्यते ॥
"द्वौ ज्येष्ठौ मध्यमौ प्रोक्तावेकज्येष्ठं शुभावहं । ज्येष्ठत्रयं न कुर्वीत विवाहे सर्वसंमतं" ॥
ज्येष्ठा कन्या वरोऽपि ज्येष्ठः । ज्येष्ठमासश्चेति त्रिज्येष्ठं । ज्येष्ठानक्षत्रेण वा त्रिज्येष्ठं । ज्येष्ठानक्षत्रं ज्येष्ठमासः ज्येष्ठा कन्येत्यपि त्रिज्येष्ठं । चतुर्ज्येष्ठे त्रिज्येष्ठस्य सद्भावान्निषेधप्रवृत्तिरस्त्येव । ज्येष्ठशब्देन चाद्यगर्भोत्पन्नमपत्यं । तदाह श्रीपतिः "आद्यगर्भदुहितुः सुतस्य वा ज्येष्ठमासि न तु जातु मंगलमिति" । तथा पक्षोऽपि पूर्वमापूर्यमाण उक्तः । बृहस्पतिः कृष्णमप्याह "शुक्लपक्षः शुभः प्रोक्तः कृष्णोऽप्यंत्यत्रिकं विनेति" । जन्मपक्षस्तु निषिद्धः
"विवाहे चोपनयने जन्ममासं विवर्जयेत् । विशेषाज्जन्मपक्षं तु वसिष्ठाद्यैरुदाहृतमिति" ॥
तिथ्यादिप्राशस्त्यनिषेधादि ज्योतिःशास्त्रादवगंतव्यं ।

इति विवाहे कालनिर्णयः ॥

अथ विवाहकालः । बौधायनः ( अ. ४।१।१२ )
"दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे । अपि वा गुणहीनाय नोपरुंध्याद्रजस्वलामिति" ॥
उपरोधनेन रजस्वलाप्रयोजको न भवेदित्यर्थः । पुराणेऽपि
"यावन्न लज्जया याति कन्या पुरुषसन्निधौ । योन्यादीन्नावगूहेत तावद्भवति कन्यका" ॥ यमः
"अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी । दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वलेति" ॥
ऊर्ध्वं द्वादशे वर्ष इत्यर्थः । उक्तं च संवर्त्तेन
"अष्टमे तु भवेद्गौरी नववर्षा तु रोहिणी । दशमे कन्यका प्रोक्ता द्वादशे वृषली भवेत्" ॥
वृषली रजस्वला । यथोक्तं देवलेन
"वंध्या च वृषली ज्ञेया वृषली च मृतप्रजा । अपरा वृषली ज्ञेया कुमारी या रजस्वलेति" ॥

---

* ट-पाठः । १ फ-आपस्तम्बः ।

यमस्तु दोषमाह

"प्राप्ते द्वादशमे वर्षे यः कन्यां न प्रयच्छति । मासि मासि रजस्तस्य पिता पिबति शोणितं " ॥ द्वादशवर्षग्रहणं प्रायिकं । कस्याश्चित्तत्रापि तद्दर्शनाभावात् । अतो रजोदर्शनं विवाहात्पूर्वं यथाकुर्यादित्युक्तं भवति । अतश्च " त्रिंशद्वर्षोद्वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् " इत्यादि मनूक्तिः ( ९।९४ ) संगच्छते । अस्याश्च ग्रहणेऽपि दोषमाह यमः ( २४ ) .

" यस्तां समुद्वहेत्कन्यां ब्राह्मणो मदमोहितः । असंभाष्यो ह्यपांक्तेयः स विप्रो वृषलीपतिः " ॥

यत्तु मनुः ( ९।८९ )

" काममामरणात्तिष्ठेद् गृहे कन्यर्तुमत्यपि । न त्वेवैनां प्रयच्छेत गुणहीनाय कर्हिचिदिति " ॥ तदपिशब्दात्कामशब्दाच्च न स्वार्थपरं । किंतु गुणवते दानप्रशंसार्थं । अग्रे स्वयमेव बाहुल्येन दोषाभिधानात् । कन्यादाने फलमाह मनुः

"नाग्निहोत्रादिभिस्तस्याद्रक्षातो ब्राह्मणस्य वा । यत्कन्यां विधिवद्दत्वा फलमाप्नोति मानव"॥ इति । सालंकृतिकन्यादाने विशेषमाह संवर्त्तः " अलंकृत्य तु यः कन्यां विधिवद्

" दत्वा फलमवाप्नोति भूषणाच्छादनादिभिः । दत्वा स्वर्गमवाप्नोति पूज्यते वासवादिभिः।

" कूपदश्चाश्वमेधी च प्राणदाताभयेषु च । समं यांति रथा एषास्त्रयो वै नात्र संशय " ॥ इति । सत्कृत्यालंकृतां कन्यां यो ददाति स कूपद इति कोशः । क्वचित्कूप इति पाठः । न चेदं फलश्रवणात्काम्यमेवेति वाच्यं । अप्रदाने दोषश्रवणात् । अतो जातेष्टिवन्नित्य काम्यं च । तथा कालांतरमपि "वैवाहिको विधिः स्त्रीणामौपनायनिकः पर " इति ( मनु. २।६७ ) । ये उपनयने कालाः पंचमवर्षादयस्त एव । कन्याविवाहे मनुर्विशेषमाह ( ९।८८ )

" उत्कृष्टायानुरूपाय वराय सदृशाय च । अप्राप्तामपि तां तस्मै कन्यां दद्याद्विचक्षणः " ॥ अप्राप्तां कालमप्राप्तामित्यर्थः । वरानुरोधेन देयेति यावत् ।

इति विवाहकालः ॥

अथ दातृक्रमः । याज्ञवल्क्यः ( आ. ६३।६४ )

" पिता पितामहो भ्राता सकुल्यो जननी तथा । कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥

" अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ" । नारदेन त्वन्येऽप्युक्ताः ( १२।२०–२१ )

" पिता दद्यात्स्वयं कन्यां भ्राता वाऽनुमते पितुः । मातामहो मातुलश्च सकुल्यो बांधवास्तथा ॥

" माता त्वभावे दातॄणां प्रकृतौ यदि वर्तते । तस्यामप्रकृतिस्थायां कन्यां दद्युः स्वजामयः" ॥ प्रकृतिस्थः उन्मादादिदोषशून्यः । वयोविशेषेण फलमाह मरीचिः

" गौरीं ददन्नाकपृष्ठं वैकुंठं रोहिणीं ददत् । कन्यां ददद्ब्रह्मलोकं रौरवं तु रजस्वलामिति " ॥ गौर्यादिस्वरूपमुक्तं । प्राक् यदि ऋतुदर्शने पिता च न ददाति तदा कन्या वर्षत्रयं प्रतीक्ष्य स्वयमेव वरयेत् । तदाह बौधायनः ( ४।१।१५ )

" त्रीणि वर्षाण्यृतुमती कांक्षेत पितृशासनं । ततश्चतुर्थे वर्षे तु विंदेत सदृशं पतिं "॥ यत्तु विष्णुः " ऋतुत्रयमुपास्यैव कन्या कुर्यात्स्वयंवरमिति " तद्गुणवद्वरविषयं । इयं प्रतीक्षा दातृसद्भावे । यदा तु कोऽपि दाता नास्ति तदा राजा दद्यात् । यथाह नारदः ( १२।२२)

---

* र–पाठ ।

" यदा तु कश्चिन्नैव स्यात्कन्या राजानमाव्रजेदिति "। यदा राजाऽपि न ददाति तदा स्वयं वरं कुर्यात् । याज्ञवल्क्यः ( आ. ६४ ) " गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयंवरमिति "। गम्यं गमनार्हं । तथा पित्राज्ञयाऽपि स्वयंवर उक्तो भारते सावित्र्युपाख्याने ( ३।२९४।२३ ) " पुत्रि प्रदानकालस्ते न च कश्चिद्वृणोति मां । स्वयमन्विच्छ भर्तारं गुणैः सदृशमात्मनः "॥ तथा नलोपाख्यानेऽपि

" स समीक्ष्य महीपालः स्वां सुतां प्राप्तयौवनां । अपश्यदात्मनः कार्यं दमयंत्याः स्वयंवरमिति "॥ स्कांदे विशेषः

" आत्मीकृत्य सुवर्णेन परकीयां तु कन्यकां । धर्मेण विधिना दातुमसगोत्रोऽपि युज्यत " इति । तत्फलं तत्रैव

" अनाथां कन्यकां दृष्ट्वा सहस्राभ्यधिके वरे । द्विगुणं फलमाप्नोति कन्यादाने यदीरितमिति "॥ अतोऽन्यकन्याऽन्येनापि धर्मार्थं देया । इति दातृस्वयंवरनिर्णयः ॥

अथ दत्तापहारः । तत्र दत्तापहारे दंडमाह याज्ञवल्क्यः ( आ. ६५ ) " सकृत्प्रदीयते कन्या हरंस्तां चौरदंडमागिति "। नारदोऽपि ( १२।३२ )

" दत्त्वा न्यायेन यः कन्यां वराय न ददाति तां । अदुष्टश्चेद्वरो राज्ञा स दंड्यस्तत्र चोरवत् "॥ दत्तां वाग्दत्तां । अदुष्टश्चेदित्यनेन दुष्टाय न देयेति गम्यते । उक्तं च गौतमेन ( ५।२१ ) " प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यादिति "। याज्ञवल्क्योऽपि ( आ. ६५ ) " दत्तामपि हरेत्पूर्वाच्छ्रेयांश्चेद्वर आव्रजेदिति "। यत्तु मनुनोक्तं ( ९।९९ )

" एतत्तु न परे चक्रुर्नापरे जातु साधवः । यदन्यस्याभ्यनुज्ञाय नरस्यान्यस्य दीयते "॥ यच्च " सकृदंशो निपतति सकृत्कन्या प्रदीयते" इति तद्दोषवर्जितविषयं । दुष्टेनापि यदि पाणिग्रहणसमयावर्वं क्रियते ततो नैव ग्राह्या । अत एव नारदः ( १२।२।३ )

" स्त्रीपुंसयोस्तु संबंधाद्वरणं प्राग्विधीयते । वरणाद्ग्रहणं पाणेः स संस्कारो विलक्षणः ॥

" तयोरनियतं प्रोक्तं वरणं दोषदर्शनादिति" । तयोर्वरणपाणिग्रहणयोर्मध्ये वरणमनियतं यतो तद्दोषदर्शनात्प्रत्यावर्तत इत्यर्थः । यमोऽपि

"नोदकेन न वाचा वा कन्यायाः पतिरुच्यते। पाणिग्रहणसंस्कारात्पतिः स्यात्सप्तमे पदे"॥ इति। अनेन सप्तपद्याः प्राग्वरमरणे न वैधव्यमिति गम्यते । वसिष्ठेनाप्युक्तं ( १७।७२ )

" अद्भिर्वाचा च दत्तायां म्रियेताद्यो वरो यदि । न च मंत्रोपनीता स्यात्कुमारी पितुरेव सेति "॥ वरणोत्तरं देशांतरगमने आह कात्यायनः

" वरयित्वा तु यः कश्चित्प्रणश्येत्पुरुषो यदा । ऋत्वागमांस्त्रीनतीत्य कन्याऽन्यं वरयेत्पतिमिति"॥ प्रणश्येद्देशांतरं गच्छेदिति माधवः । अन्यथा परीक्षावैयर्थ्यात् । एवं च

" प्रतिगृह्य च यः कन्यां वरो देशांतरं व्रजेत् । त्रीनृतून्समतिक्रम्य कन्याऽन्यं वरयेद्वरमिति "। ( १२।२४ ) नारदीयेनाप्येकार्थता भवति । शुल्कदातुर्देशांतरमृतौ कात्यायन आह

---

१ र-सु।

"प्रदाय शुल्कं गच्छेयः कन्यायाः स्त्रीधनं तथा। धार्या सा वर्षमेकं तु देयाऽन्यस्मै विधानत"॥ इति। शुल्कदमरणे मनुराह ( ९।९७ ) "कन्यायां दत्तशुल्कायां म्रियेत यदि शुल्कदः। देवराय प्रदातव्या यदि कन्याऽनुमन्यते"। यदि कन्यानुमन्यत इत्यनेन कन्यानुमतौ* देवराय । यदि तु देवरातिरिक्तमेवानुमन्यते तदा तस्मा एव । बहुभिर्निर्दोषैर्वरणे कृते विशेषमाह कात्यायनः "अनेकेभ्यो हि दत्तायामनूढायां तु तत्र वै । परागतश्च सर्वेषां लभेतादिवरः सुतां ॥ "अथागच्छेत वोढायां दत्तं पूर्ववरो हरेत्"। अन्यस्मै दत्तायां तस्यां यच्छुल्कं तदेव लभेतेत्यर्थः । सदोषाय प्रथमं प्रतिश्रुताऽपि न देया। "दत्तामपि हरेत्पूर्वाच्छ्रेयांश्चेद्वर आव्रजेत्" इति स्मृतेः (या. व. आ. ६५)। वसिष्ठस्तु पाणिग्रहणोत्तरमपि ग्राह्येत्याह ( १७।७४ ) "पाणिग्रहे कृते कन्या केवलं मंत्रसंस्कृता । सा चेदक्षतयोनिः स्यात्पुनः संस्कारमर्हति"।

नारदोऽपि "उद्वाहिताऽपि सा कन्या न चेत्संप्राप्तमैथुना । पुनःसंस्कारमर्हेत्सा यथा कन्या तथैव सा"॥ अयं चोढोढोत्तरमपहारः कलौ निषिद्धः । कलिनिषिद्धानि च समयमयूखे वक्ष्यंते। वाग्दानोत्तरं तु कन्यादोषोपलंभे गृहीताया अपि त्यागमाह मनुः ( ९।७२ ) "विधिवत्प्रतिगृह्यापि त्यजेत्कन्यां विगर्हितामिति"। विगर्हितां दुष्टां । नारदः ( १२।३ ) "नादुष्टां दूषयेत्कन्यां नादुष्टं दूषयेद्वरं । दोषे सति न दोषः स्यादन्योन्यं त्यजतोर्द्वयोः"॥ कन्यादोषा नारदेन दर्शिताः ( १२।३६ ) "दीर्घकुत्सितरोगार्ता व्यङ्गा संस्पृष्टमैथुना । धृष्टाऽन्याहितभावा वा कन्या दुष्टा प्रकीर्तितेति"। अन्यस्मिन्पुरुषांतरे आहितः कृतो भावो मानसाभिलाषो यया सा तथोक्ता । अदुष्टायां दोषमाह याज्ञवल्क्यः ( आ. ६६ ) "अदुष्टां च त्यजन्दंड्यो दूषयंस्तु मृषा शतमिति"। कन्यादोषमनाख्याय ददत्पित्रादिरपि दंड्य इत्याह स एव ( आ. ६६ ) "अनाख्याय ददद्दोषं दंड्य उत्तमसाहसमिति"।

इति दत्तापहारनिर्णयः ॥

अधिवेदने निमित्तान्याह याज्ञवल्क्यः ( आ. ७३ ) "सुरापी व्याधिता धूर्ता वंध्यार्थघ्न्यप्रियंवदा । स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा"। धूर्ता विसंवादशीला । अधिवेदनं भार्यांतरपरिग्रहः । विशेषमाह मनुः ( ९।८०–८१ ) "मद्यपाऽसत्यवृत्ता च प्रतिकूला च या भवेत् । व्याधिता चाधिवेत्तव्या हिंस्राऽर्थघ्नी च सर्वदा" "वंध्याऽष्टमेऽधिवेद्याऽब्दे दशमे तु मृतप्रजा । एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी" एतेषु निमित्तेष्वधिवेत्तव्येत्यभ्यनुज्ञामात्रं । न तु अधिवेदकरणे प्रत्यवायः। याज्ञवल्क्यः (आ. ७४) "अधिविन्ना तु भर्तव्या महदेनोऽन्यथा भवेत् । अधिविन्नस्त्रियै देयमाधिवेदनिकं समम्" "न दत्तं स्त्रीधनं यासां दत्ते त्वर्द्धं प्रकल्पयेदिति" ( आ. १४८ ) ॥ इत्यधिवेदनं ।

अथ विवाहोपनयनादौ निषेधास्त उच्यंते सारावल्यां "एकमातृप्रसूतानामेकस्मिन्वत्सरे यदि । विवाहं नैव कुर्वंति कुर्वंति तु ततोऽन्यथा"॥

* ह्र-वधिरप्यनुमतौ वा । १ अइडफर-+अपि

भिन्नमातृकया वत्सरभेदेन वा । प्रयोगपारिजाते स्मृत्यंतरे
" विवाहस्त्वेकजन्यानामेकस्मिन्नुदये कुले । नाशं करोत्येकवर्षे स्यादेका विधवा तयोः " ॥
उदयो लग्नं । क्वचिदपवादस्तत्रैव
" एकोदरी करतलग्रहणं यदि स्यादेकोदरस्थवरयोः कुलनाशनं च ।
" एकाब्दके तु विधवा भवतीति कन्या नयन्तरे तु शुभदं पृथुशीलरोपे " ॥ विशेषमाह नारदः
" पुत्रोद्वाहात्परं पुत्रीविवाहो न ऋतुत्रये । न कार्यं व्रतमुद्वाहान्मङ्गले नाप्यमङ्गलम् ॥
" विवाहश्चैव कन्यानां षण्मासाभ्यन्तरे यदि । असंशयं त्रिभिर्वर्षैस्तत्रैका विधवा भवेदिति " ॥
मंगले विवाहादौ । अमंगलं[1] श्राद्धादि । अनुकल्पमाह गर्गः
" पुत्रीपरिणयादूर्ध्वं यावद्दिनचतुष्टयं । पुत्र्यंतरस्य कुर्वीत नोद्वाहमिति सूरयः " ॥
अनुकल्पांतरमाह स एव
" भ्रातृयुग्मे स्वसृयुग्मे च भ्रातृस्वसृयुगे तथा । न जातु मंडनं कार्यमेकस्मिन्मंडपेऽहनीति " ॥
भ्रातृयुग्मस्य स्वसृयुग्मस्य भ्रातृस्वसृयुग्मस्य च एकस्मिन्नहनि एकस्मिन्मंडपे मंडनं न कुर्यात् । पृथगयं निषेधः । समुच्चये मानाभावात् । इदं च वचनद्वयं भिन्नमातृजाविषयमिति केचित् । तन्न मानाभावात् । एकोदराहितैकशुक्रजन्यापत्ययोर्मुख्यस्य भ्रातृशब्दस्यान्यगौणत्वाच्च ।
अन्यविशेषमाह नारदः
" प्रत्युद्वाहो नैव कार्यो नैकस्मै दुहितृद्वयं । न चैकजन्मनो[2] पुंसोरेकजन्ये तु कन्यके ॥
" नूनं कदाचिदुद्वाहो नैकदा मुंडनद्वयमिति " । नूनं कदाचिदुद्वाहाविति सापत्नपरं । मुंडनद्वयं सापत्नयोरपि न भवति । दुहितृद्वयं न देयमित्यध्याहारः । कन्यके न देये इति च । विशेषांतरं संहितासारावल्यां " सापत्नयोर्मुंडनमूर्ध्वमिष्टं न पुत्रयोर्मुंडनमेकवर्षे ।
" न पुंविवाहोर्ध्वमृतुत्रयेऽपि विवाहकार्यं दुहितुः प्रकुर्यात् " ॥ अत्रापवादः " न मंडनाच्चापि हि मुंडनं तु । गोत्रैकतायां यदि नाब्दभेद " इत्यपि क्वचित् । मुंडनं चौलं । " मुंडनं चौलमित्युक्तं व्रतोद्वाहौ तु मंडनमिति " । ऋतुत्रयापवाद[3] उक्तः सारावल्यां
" फाल्गुने चैत्रमासे तु पुत्रोद्वाहोपनायने । भेदादब्दस्य कुर्वीत नर्तुत्रयविलंघनमिति " ॥
यमलयोर्विशेषः
एकस्मिन्वत्सरे चैव वासरे मण्डपे तथा । कर्तव्यं मगलं स्वस्रोर्भ्रात्रोर्यमलजातयोः ॥ इति ।
पुत्रोद्वाहः प्रवेशाख्यः कन्योद्वाहस्तु निर्गमः । मुंडनं चौलमित्युक्तं व्रतोद्वाहौ तु मंगलम् " ॥*
हारीतोऽन्यविशेषमाह
" स्पर्शिता स्याद्यदा कन्या वाचा वाऽप्युदकेन[4] वा । अंतरा प्रातिकूल्यं चेत्पूर्वोढा विधवा भवेत् ॥
" अचिरेणैव कालेन पशुमृत्युधनक्षय " इति । प्रातिकूल्यं मरणं । दक्षः
" दंपत्योः पितरौ भ्राता सोपनीतः सहोदरः । पितृव्यस्तादृशश्चैव पितामहपितामही ॥
" एषामन्यतमे नष्टे नोद्वहेत्तौ वधूवरः " ॥ ज्योतिःप्रकाशे
" प्रतिकूलेऽपि कर्तव्यो विवाहो मासतः परं । शांतिं विधाय गां दत्वा वाग्दानादि चरेत्पुनरिति[6] ॥ इति शांतिर्नवग्रहयज्ञादिः ॥ इति प्रतिकूलविचारः ।
×[ अथ विवाहाग्न्यनुगमनादौ प्रायश्चित्तम् । तत्र गृहप्रवेशनीयहोमात्पूर्वं द्वादशरात्रमध्ये

---

१ रफ-ले । २ छ-तो रफ-न मुंडनान्मंडनमूर्ध्वं, अइड-नमंडनान्मुंडन । ३ र-ऋतुत्रयापवाद; अइड-ऋतुत्रयापवाद । * ग-पाठ. । ४ ग-अपि उदकेन च । ५ ग-तादृश । ६ ग-पाठ । × अयं पाठो ज-पुस्तक एवोद्धृत । अइडफरछेषु तु नैव दृश्यते ।

विवाहाग्न्यनुगमने श्रोत्रियागाराद्ग्निमानीयाऽऽयतने स्थापयित्वा परिसमूहनादि कृत्वाऽऽज्यं संस्कृत्य 'अयाश्च' इत्येकामाहुतिं हुत्वा नित्यहोमं कुर्यात् । द्वादशरात्रोत्तरमाज्याहुतयो लाजाहुतयश्चाऽऽवर्तनीयाः । इदं च 'नित्यानुगृहीतः स्यात्' इति सूत्रव्याख्यावसरे देवस्वामिभाष्ये इत्यमुक्तम् 'उपशान्तेऽन्यमग्निमाहृत्य होमकार्यं आहरणप्रायश्चित्तं कृत्वा परिचरणं स्यात्' इति । नारायणेन वृत्तिकृता तु "यदि विवाहाग्निर्नष्टः स्यान्नष्टाहरणप्रायश्चित्तं कृत्वा परिचरेत्' इत्युक्त्वा 'यदि तूपशाम्येत्पत्न्युपवसेदित्येके' इति सूत्रव्याख्यावसरे पुनरेवमुक्तम् । अत्र एकेग्रहणाद्यजमानो वेत्येके 'अयाश्च' इत्येकामाहुतिं जुहुयादित्यन्ये । कुतः शास्त्रान्तरे दर्शनात् इति । अत्र शास्त्रान्तरम् 'उपवासश्चान्यतरस्य भार्यायाः पत्युर्वाऽनुगतेऽपि चोत्तरया जुहुयान्नोपवसेत्' इत्यापस्तम्बसूत्रम् । अन्यतरस्य कालस्य अन्हो रात्रेर्वा संबन्धादुपवासोऽनशनम् ।'उत्तरया 'अयाश्च' इत्येतयाऽऽज्येन जुहुयात्' इति सुदर्शनभाष्ये स्थितम् । इदमेव देवस्वामिभाष्ये स्पष्टीकृतम् । गृहप्रवेशनीयहोमोत्तरं द्वादशरात्रमध्येऽनुगमने उक्तप्रायश्चित्तमेव । तदूर्ध्वं तु विवाहहोमस्य गृहप्रवेशनीहोमस्य चाऽऽवृत्तिरिति वृत्तिग्रन्थे स्पष्टम् । तथाहि गृहप्रवेशनीयसूत्रे 'विवाहाग्निमुपसमाधाय' इत्यत्र विवाहाग्निग्रहणान्न विवाहहोममात्रेणाग्नेर्गृहीतत्वसिद्धिः । किं तर्हि विवाहहोमगृहप्रवेशनीयहोमाभ्यामेवेत्युक्त्वोपसहृतम् । तेनाग्निनाशे होमद्वयं कार्यमिति सिद्धमिति । तदनन्तरं पाणिग्रहणसूत्रे नष्टाहरणप्रायश्चित्तमुक्त्वा मतान्तरमुक्तम् । यदि वैवाह्यो न गृहीतः दायविभागकाले गृह्यते गृहीतो विनष्टः द्वादशरात्रमतिक्रान्तस्तत उक्तया क्रियया पश्चाद्गृहीतो भवति । तत्र विवाहाज्याहुतयो लाजाहुतयो गृहप्रवेशनीयाहुतयश्च हृदयाञ्जनं च भवति नान्यत् । कन्यासंस्कारत्वाद्धोमद्वयं चात्र समानतन्त्रं स्यादिति । अत्र सर्वत्र मूलं चतुरध्यायात्मकाश्वलायनगृह्यपरिशिष्टम् । तत्र प्रथमाध्याये सप्तदशः खण्डः—अथ पुनराधानमनुगतेऽग्नि शिष्टागारादानीयोक्तवदुपसमाधाय परिसमुह्य परिस्तीर्य पर्युक्ष्याऽऽज्यमुत्पूयायाश्चाग्न इत्येकामाज्याहुतिं हुत्वा यथापूर्वं परिचरेद्देवमाद्वादशरात्रादत उर्ध्वं विवाहगृहप्रवेशनीयहोमाभ्यामेकतन्त्राभ्यामादध्यात्तत्र विवाहोज्याहुतयो लाजाहुतयो गृहप्रवेशनीयाहुतयो हृदयाञ्जनं भवति । कर्तैव लाजानावपत्येतत्पुनराधानम् । नित्यहोममतीत्य मनस्वत्या चतुर्गृहीतं जुहुयाद्द्वादशरात्रादूर्ध्वं पुनराधानमेव कुर्यादिति । गृह्यसूत्रगृह्यपरिशिष्टमूलिकाश्चात्र गृह्यकारिकाः

"औपासनोऽनुगच्छेच्चेदुपलेपादि पूर्ववत् । आहृत्य श्रोत्रियागारात्प्रतिष्ठाप्य हविर्भुजम् ।
"अन्यस्माद्धोमकालात्स्त्री नाश्रीयाद्यदि वा गृही । पर्युक्षणादिकं कृत्वा संस्कृत्याऽऽज्यं च पूर्ववत् ॥
"अयाश्चेत्येतया हुत्वा यथापूर्वं जुहोत्यथ" ॥ इति ।
तथा—"उपलेपादिकं कुर्यादाघारान्तं विवाहवत् । विवाहाज्याहुतीर्हुत्वा लाजहोमो भवेदथ ॥
"गृहप्रवेशनीयाश्च हुत्वाऽस्या हृदयाञ्जनम् । परिणीत्यादि नान्यत्स्याल्लाजानावपते स्वयम् ॥
"समानतन्त्रक चेह होमद्वयमिदं भवेत्" । इति ।

अस्याग्नेर्नाशापहारयोरिदमेव प्रायश्चित्तं 'यदि तूपशाम्येत्' इति सूत्रस्य नाशापहारयोः प्रदर्शनार्थत्वात् । अत्र प्रयोगपारिजातग्रन्थ इत्थम्–' एवं हि रक्षितोऽग्निर्गृहप्रवेशनीयहोमाद्वर्वागनुगतश्चेत्तदा विवाहहोमः पुन' कार्यः । गृहप्रवेशनीयहोमानन्तरमुपगतश्चेत्तर्हि होमद्वयमपि पुनः कर्तव्यमिति गृहप्रवेशनीयहोमसूत्रे वृत्तिकारेणोक्तत्वाच्चद्द्वादशरात्राद्यावनुसन्धेयमिति'

अस्माद्विवाहहोमोत्तरं गृहप्रवेशनीयहोमात्पूर्वं द्वादशरात्रमध्येऽप्यग्न्यनुगमने विवाहहोमावृत्तिं मन्यन्ते यथाश्रुतग्राहिणः । तद्दृष्टान्ताज्ञानविजृम्भितम् । यतो गृहप्रवेशनीयहोमोत्तरं द्वादशरात्रोत्तरमेव होमद्वयावृत्तिर्वृत्तिकारादीनामिष्टेत्युक्तमेव । अतस्तद्दृष्टान्तापीत्यनेनापि द्वादशरात्रोत्तरं गृहप्रवेशनीयहोमात्पूर्वमग्न्यनुगमने विवाहहोमावृत्तिरिति तद्ग्रन्थार्थो ज्ञेयः । न च नित्यहोमारम्भात्पूर्वमनुगमने तदावृत्तिः होमारम्भोत्तरं तु प्रायश्चित्तमिति शङ्क्यम् । गृहप्रवेशनीयहोमोत्तरं नित्यहोमारम्भात्पूर्वमपि होमद्वयावृत्तिप्रसङ्गात्प्रमाणाभावाच्च ।

यत्तु औपासनात्पूर्वं यदि विवाहाग्निः शाम्येत तदा प्रायश्चित्तमुक्तं बिम्बादर्शे

‘ उद्वाहोपासनात्पूर्वमनले शान्तिमागते । स्थालीपाकं ततः कृत्वा औपासनमथाचरेत् ॥

‘ नवनाडीभ्य ऊर्ध्वं चेत्स्थालीपाको भवेन्न वै । औपासनं तदा कुर्यात्परेद्युः सायमेव च”॥

इति विधानपारिजात उक्तं तदाश्वलायनान्यपरम् । आश्वलायनानां प्रायश्चित्तार्थं स्थालीपाकाभावात् । वस्तुतस्तु बिम्बादर्शग्रन्थेऽदर्शनान्निर्मूलमेव । यत्तु आपस्तम्बीयाश्वलायनीयपद्धतिकारौ सिंगाभट्टकृष्णभट्टौ विवाहहोमोत्तरमेवाग्निनाशे पुनर्विवाहहोमप्रतिपादकम्

‘ उद्वाहोपासनात्पूर्वमनले शान्तिमागते । पुनर्होमान्तरं कृत्वा कर्मशेषं समापयेत् ”

इत्यापस्तम्बवचनमिति लिलिखतुः तत्प्रवरदेवस्यैकादशाध्यायात्मकापस्तम्बस्मृतौ निबन्धान्तरे चादर्शनाद् बहुसंग्रहकारप्रयोगपारिजातकारेणालिखनाच्च नाऽऽश्वासनीयम् ।

इत्यग्न्यनुगमनप्रायश्चित्तनिर्णयः ॥

अथाशौचनिर्णयः । याज्ञवल्क्यः ( प्रा. २९ )

‘ दाने विवाहे यज्ञे च संग्रामे देशविप्लवे । आपद्यपि च कष्टायां सद्यः शौचं विधीयते ”॥

विष्णुः “ ब्रह्मयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे । प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकं ” ॥

प्रारंभं स एवाह “प्रारंभो वरणं यज्ञे संकल्पो व्रतसत्रयोः नांदीमुखं विवाहादौ श्राद्धे पाकपरिक्रियेति”॥

बृहस्पतिः

‘ विवाहोत्सवयज्ञेषु त्वंतरामृतसूतके । पूर्वसंकल्पितार्थेषु न दोषः परिकीर्तित ” ॥ इति ।

षट्त्रिंशन्मते

“ विवाहोत्सवयज्ञेषु त्वन्तरामृतसूतके । परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः ” ॥ परैरसगोत्रैः।

“ भुञ्जानेषु तु विप्रेषु त्वन्तरामृतसूतके । अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः”॥ इति ।

भक्तं त्याज्यं । तथा च ब्राह्मे “ भोजनार्द्धे तु संभुक्ते विप्रे सूतिर्विपद्यते ” ।

‘ यदि कश्चित्तदोच्छिष्टं शेषं त्यक्त्वा समाहितः । आचम्य परकीयेन तोयेन शुचयो द्विजाः”॥ इति।

प्रावश्यकत्वे नान्दीश्राद्धावधिरुक्तः स्मृत्यन्तरे

‘ एकविंशत्यहर्यज्ञे विवाहे दश वासराः । त्रिषड् चौलोपनयने नान्दीश्राद्धं विधीयते ” ॥ इति ।

प्रारंभाभावेऽप्यग्रे कालांतराभावे आशौचापवाद उक्तो विष्णुना

‘ आरब्धस्य विशुध्यर्थं कूष्माण्डैर्जुहुयाद्घृतं । गां दद्यात्पंचगव्याशी ततः शुद्ध्यति सूतकी ”॥

सूतकीति जननाशौचेवंतं प्रत्येवेदं प्रवर्तते । बहूनां संभाराणां संपादितानां धारणाशक्ताचाह विष्णुः

‘ न देवप्रतिष्ठाविवाहयोः पूर्वसंभृतयोरिति ” । आशौचं नेत्यर्थः । इत्याशौचनिर्णयः ।

---

१ ग–प्रत । २ इ–गो । ३ ग–भाव । ४ ग–र्चं । × ङ–तथा ।

रजोदोषे वृद्धमनुः
" विवाहव्रतचूडासु माता यदि रजस्वला । तदा न मङ्गलं कार्यं शुद्धौ कार्यं शुभेच्छुभिः " ॥ गर्गः
" यस्योद्वाहादिमङ्गल्ये माता यदि रजस्वला । तदा न तत्प्रकर्तव्यमायुःक्षयकरं यतः " ॥ इति
मेधातिथिः "चौले च व्रतबंधे च विवाहे यज्ञकर्मणि । भार्या रजस्वला यस्य प्रायस्तस्य न शोभनं ।
"वधूवरान्यतमयोर्जननी चेद्रजस्वला । तस्याः शुद्धेः परं कार्यं मांगल्यं मनुरब्रवीत्" ॥ बृहस्पतिः
" वैधव्यं च विवाहे स्याज्जडत्वं व्रतबंधने । चूडायां च शिशोर्मृत्युर्वित्तं यात्राप्रवेशयोः " ।

## अथ वेदिः

तथा "सूतिकोदक्ययोः शुद्ध्यै गा दद्याद्धोमपूर्वकं । प्राप्ते कर्मणि शुद्धिः स्यादितरस्मिन्न शुद्ध्यति
" अलाभे सुमुहूर्तस्य रजोदोषे च संगते । श्रियं संपूज्य तत्कुर्याद्व्रतहत्यामयं न हि ॥
" हैमीं माषमितां पद्मां श्रीसूक्तं विधिनार्चयेत् । प्रत्यृचं पायसं हुत्वा अभिषेकं समाचरेदिति"
अस्य मूलं मृग्यं । विवाहवेदिमाह नारदः
" हस्तोच्छ्रितां चतुर्हस्तैश्चतुरस्रां समंततः । स्तंभैश्चतुर्भिः सुश्लक्ष्णैर्वामभागे स्वसद्मनः ॥
" विचित्रितां चित्रकुंभैर्विविधैस्तोरणांकुरैः । एवंविधामारुरोहेन्मिथुनं साग्निवेदिकमिति " ॥

इति वेदिः ॥

अथ कन्यादानार्थं रात्रावपि स्नानमाह वृद्धयाज्ञवल्क्यः
" ग्रहणोद्वाहसंक्रांतियात्रार्तिप्रसवेषु च । स्नानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते " ॥
विवाहेऽपि रात्रिमनुजानात्यत्रिः
"मुख्यो विवाहः पूर्वाह्णे मध्याह्ने चोत्तमोत्तमः । निशायां मध्यमः प्रोक्तस्त्वपराह्णे तु गर्हित"॥ इति
विवाहश्च कन्यापितरं प्रति दानं । वरं प्रति पाणिग्रहणादि । कन्या भुक्तवताऽपि प्रतिग्राह्येत्याह व्यासः
" भुक्त्वा समुद्वहेत्कन्यां सावित्रीग्रहणं तथा । उपोषितः सुतां दद्यादर्चितां यद्विजाय त्विति "॥
सर्वेषु दानेषु प्राङ्मुखो दातोदङ्मुखः प्रतिगृहीता । कन्यादान उदङ्मुखो दाता प्राङ्मुख संप्रदानमिति वक्ष्यते दानमयूखे ।
मधुपर्कमाहाश्वलायनः (१।२४।१–२)"ऋत्विजो वृत्वा मधुपर्कमाहरेत्स्नातकायोपस्थितायेति" उपस्थितायेति उपस्थिताय कन्याप्रतिग्रहार्थमागताय । अस्मिन्मधुपर्के गवालंभः कलौ न कार्यः । पादप्रक्षालने मधुपर्कविशेषेण विशेषमाहाश्वलायनः (१।२४।९–१०) । "दक्षिणम् ब्राह्मणाय प्रयच्छेत्सव्यं शूद्रायेति " । अग्रे प्रथमं । एवं च । क्षत्रियवैश्ययोरनियमः ब्राह्मणग्रहणं द्विजोपलक्षणमिति केचित् । मधुपर्कश्च भोजनं । तथा च नारायणेन ' नामार्थ मधुपर्को भवतीति ' सूत्रव्याख्याने उक्तं । ' मासस्य लोके व्यंजनस्थानीयत्वात्तत्सहितो मधुपर्क भोजनमिति ' । अयं चार्च्यशाखया कार्यः । तदुक्तं परिशिष्टे
" अर्च्यस्य यस्य या शाखा तच्छाखा गृह्यचोदितः । मधुपर्कः प्रदातव्योऽप्यन्यशाखेऽपि दातरीति"
याज्ञिकास्तु ज्योतिष्टोमादावन्यशाखीयोऽपि यच्छाखां यमार्त्विज्यं करोति तच्छाखया कुर्वंति तत्संप्रदायमात्रं । कन्यादानं तु दानमयूखे वक्ष्यते ।

१ र–मंगले । २ र–पाणिग्रहणमंगलम् । ३ र–यसंमत. । ४ ग–च । ५ र–विवाह निराग्निम् । ६ ङह–मुह
७ ङ–वैश्यशूद्रयो ।

अथ वधूगृहप्रवेशः । मिहिरः
" विवाहस्य निवृत्तिस्तु चतुर्थेऽहनि रात्रिषु । तासु नागबलिः कार्यो विप्राशीर्वाचनं तथा " ॥
नागानां हस्तिनां बलिः पूजा । विधिमाह यज्ञपार्श्वः
" चतुर्थे दिवसे रात्रौ लिखेन्मानःसरोवरं । हिरण्यगर्भं तन्मध्ये गंधपुष्पाक्षतादिभिः ॥
" संपूज्याप्सरसश्चैव सोमगंधर्वपावकान् । संपूज्य वाऽश्वहस्त्यादीनारोप्य स्वगृहं प्रति ॥
" संवेशनादिकं कर्म अन्यथा तु भजेद्भयं " । संवेशनं गृहप्रवेशः । कालदीपे
" शुभकाले गृहे प्राप्तौ वर्द्धते संपदः सदा । असत्काले गृहप्राप्तौ सर्वनाशो गृहे भवेत् " ॥
नारदः " आरभ्योद्वाहदिवसात्षष्ठे वाऽप्यष्टमे दिने । वधूप्रवेशः संपत्त्यै दशमेऽथ समे दिने " ॥
तथा "समवर्षे समे मासि यदि नारी गृहं व्रजेत् । आयुष्यं हरते भर्तुः सा नारी मरणं व्रजेदिति " ॥
तथा " वधूप्रवेशः प्रथमे तृतीये शुभप्रदः पंचमकेऽथ वाऽब्दे ।
" द्वितीयके वाऽथ चतुर्थके वा षष्ठे वियोगामयदुःखदः स्यादिति " । तथा ज्योतिःप्रकाशे
" वामे शुक्रे नवोढायाः सुखं हानिश्च दक्षिणे । धनं धान्यं च पृष्ठस्थे सर्वनाशः पुरा स्थिते ।
" नवोढायास्तु वैधव्यं यदुक्तं संमुखे भृगौ । तदेवं विबुधैर्ज्ञेयमन्यथा तु द्विरागमे " ॥ इति ।
अन्यत्कुमुहूर्तादिदैवज्ञोदितं ग्राह्यं । इति वधूप्रवेशः ॥

मंडपोद्वासनकालः प्रयोगरत्ने
" समे च दिवसे कुर्यान्मंडपोद्वासनं बुधः । षष्ठं च विषमं नेष्टं मुक्त्वा पंचमसप्तमौ " ॥
षष्ठं नेष्टमित्यर्थः । विषममपि नेष्टं । पंचमसप्तमे दिने मुक्त्वा । इति मंडपोद्वासनं ॥

*अथ नांदीश्राद्धोत्तरमंडपोद्वासनावधि केचिन्निषेधाः । गार्ग्यः
" नांदीश्राद्धकृते पश्चाद्यावन्मातृविसर्जनं । दर्शश्राद्धक्षयश्राद्धस्नानं सीतोदकेन च ॥
" अपसव्यं स्वधाकारं नित्यश्राद्धं तथैव च । ब्रह्मयज्ञं चाध्ययनं नदीसीमातिलंघनं ॥
" उपवासव्रतं चैव श्राद्धभोजनमेव च । नैव कुर्युः सपिंडाश्च मंडपोद्वासनावधि " ॥ इति ।
स्वधाकारशब्दः पितृसंज्ञपरः ।
न च नित्यश्राद्धनिषेधेनैव तन्निषेधसिद्धिरिति वाच्यं । श्राद्धपितृयज्ञः स्यात् पित्र्यो (?) बलिरथापि निषेधे नेयः । (पि ?) ऽयबलिवैकल्पिकपितृ (य ?) ज्ञः निषेधासिद्धेः । तेन तत्सहचरितवैश्वदेवस्यापि निषेधो नेयः । गोपीचंदनातिलकवाक्यमपि याति ।
' अभ्यंगे सूतके चैव विवाहे पुत्रजन्मनि । मांगल्येषु च सर्वेषु न धार्यं गोपीचंदनमिति " ॥
अथ तृतीयमानुषीविवाहनिषेधो मात्स्ये
" तृतीयां मानुषीं नैव चतुर्थीं यः समुद्वहेत् । पुत्रपौत्रादिसंपन्नः कुटुंबी साग्निकोऽज्वरः ।
" उद्वहेद्रतिसिद्ध्यर्थं तृतीया न कदाचन । मोहादज्ञानतो वाऽपि यदि गच्छेत्तु मानुषी ।
" नश्यत्येव न संदेहो गर्गस्य वचनं यथेति " । संग्रहे
" चतुर्थादिविवाहार्थं तृतीयेऽर्कं समुद्वहेदिति " । अर्कविवाहप्रकारः शांतिमयूखे द्रष्टव्यः ।
ज्येष्ठे भ्रातर्यकृतविवाहे कनिष्ठो न विवहेदित्युक्तं चतुर्विंशतिमते
" जीवत्पितरि नादध्यादाहिताग्निः स नो यदि । तथैव भ्रातरि ज्येष्ठे न यजेन्न विवाहयेत् ॥
" ज्येष्ठभ्रात्रा त्वनुज्ञातः कुर्यादग्निपरिग्रहं । अनुज्ञातोऽपि सपित्रा नादध्यान्मनरब्रवीत् " ।
कश्चिद्दोष इत्याह कात्यायनः

---

१ झ-अष्टमे । *ट-पाठ. । २ ग-वक्ष्यते ।

“ देशांतरस्थक्लीबैकवृषणानसहोदरान् । वेश्याभिसक्तपतितशूद्रकल्पातिरोगिणः ॥
“ जडमूकांधबधिरकुब्जवामनकुंठकान् । अतिवृद्धानभार्यांश्च कृषिसक्तान्नृपस्य च ॥
“ धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा । कुहकांस्तस्करांश्चापि परिविंदन्न दुष्यति ” ॥

अभार्याग्निहोत्रिकादीन् । अन्यथा दोष इति गम्यते । यमलयोर्मध्ये जन्मनैव ज्येष्ठता । केचिदाधान-क्रम ज्येष्ठं वर्णयंतः पश्चाज्जातस्य पूर्वमाधानं भवतीति तस्यैव ज्येष्ठतामाहुः । तन्न । आधान-प्राथम्येन ज्येष्ठतायां मानाभावात् । अन्यथा पत्नीनां पूर्वापरभावेनाधाने जाते उत्तराहितस्य प्रथमोत्पत्तौ ज्येष्ठता न स्यात् । आधाने जन्मशब्दाभावाच्च । अत एवाह मनुः ( ९।१२६ ) “ यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता मतेति ” । मेधातिथिनाऽपि जन्मत एव ज्यैष्ठ्यमित्युक्तं अस्मिन्विषये । तथाऽग्रेदिधिषूविषये भूमान्प्रपंचः प्रायश्चित्तमयूखे निरूपयिष्यते ।

पुनर्विवाहेऽग्निमाह कात्यायनः

“ सदारोऽन्यान्पुनर्दारानुद्वोढुं कारणांतरात् । यदीच्छेदग्निमान्कुर्वन् क होमोऽस्य विधीयते ॥
“ स्वाग्नावे व भवेद्धोमो लौकिके न कदाचनेति ” ।

इदं चाग्निसन्निधाने । अग्निसन्निधानाभावे तु लौकिके कृत्वाऽग्निद्वयसंसर्गं कुर्यात् । संसर्गं चाह शौनकः

“ अथाग्न्योर्गृह्ययोर्योगं सपत्नीभेदजातयोः । सहाधिकारसिध्यर्थमहं वक्ष्यामि शौनकः ॥
“ पृथक् स्थंडिलयोरग्निं समाधाय यथाविधि । तंत्रं कृत्वाऽऽज्यभागांतमग्न्याधानादिकं ततः ॥
“ जुहुयात्पूर्वपत्न्यग्नौ तयाऽन्वारब्ध आहुतीः । अग्निमीळे पुरोहितं सूक्तेन नवर्चेन तु ॥
“ समिध्येनं समारोप्यायं ते योनिरित्यृचा । प्रत्यवरोहेत्यनया कनिष्ठाग्नौ विधीयते ॥
“ आज्यभागांततंत्रादि कृत्वारभ्य तदादितः । समन्वारब्ध एताभ्यां पत्नीभ्यां जुहुयाद् घृतं ॥
“ चतुर्गृहीतेनैताभिर्ऋग्भिः षड्भिर्यथाक्रमं । अग्नावग्निश्चरतीति अग्निनाग्निः समिध्यते ॥
“ अस्तीदमिति तिसृभिः पाहि नो अग्न एकया । ततः स्विष्टकृदारभ्य होमशेषं समापयेत् ॥
“ गोयुग्मं दक्षिणा देया श्रोत्रियायाहिताग्नये ।
“ पत्न्योरेका यदि मृता दग्धा तेनैव तां पुनः । आददीतान्यया सार्द्धमाधानविधिना गृहीति ”॥

इत्यग्निद्वयसंसर्गः ॥

अथ सायंप्रातर्होमः । तत्र सायंकालादारंभः । तत्कर्तृनाहाश्वलायनः (१।९।१) “ पाणि-ग्रहणादि गृह्यं परिचरेत्पत्न्यपि वा पुत्रः कुमार्यंतेवासी वेति ” । दक्षः

“ ऋत्विक्पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः । एतैरेव हुतं यत्तु तध्दुतं स्वयमेव त्विति ” ।

एतैश्च यजमानस्य पत्न्या वा अनुज्ञया तत्सन्निधौ च होतव्यं नान्यथा । पर्वणि तु सायंहोमः स्वयमेव कार्यो नान्येन । तत्र प्रादुष्करणकालमाह कात्यायनः

“ सूर्ये तु शैलमप्राप्ते षट्त्रिंशद्भिरिहांगुलैः । प्रादुष्करणमग्नीनां प्रातर्भासामदर्शने ” ॥

उक्तकालातिक्रमे व्याहृतिभिरेकाज्याहुतिः । होमकालमाह मनुः

“ लेखामात्रस्तु दृश्येत रश्मिभिस्तु समन्वितः । उदितं तं विजानीयात्तत्र होमं प्रकल्पयेत् ” ॥

अनुकल्पोऽपि “प्रदोषांतो होमकालःसंगवांत प्रातस्तमतिनीय चतुर्गृहीतमाज्यं जुहुयाद्व्याहृतिभिः” । होमद्रव्याणि गृह्यपरिशिष्टे ( १।१८ ) “ पयोदधिसर्पिर्यवागूरोदनं तंडुलाः सोमस्तैलमापो व्रीहयो यवास्तिला इति होम्यानि ” ।

१ षड्विंशाद्भि ।

संग्रहे

" द्रवं हविः स्रुवेणैव पाणिना कठिनं हविः । अंगुल्यग्रैर्न होतव्यं न कुर्वांगुलिनोद्गनामिति " ॥
आयतनं चोक्तं
" अरत्निमात्रमग्न्यर्थे 'कार्यमायतनं बुधैः । पशीलमात्रमित्येके तदप्यल्पांतरं भवेदिति " ॥
अपत्नीकोऽपि पूर्वमृतायै पत्न्यै अर्द्धाग्निं दत्वाऽवशिष्टार्द्धाग्नौ पूर्ववत्सायंप्रातर्होमौ कुर्यादिष्टिं तु नेति ।

इति नित्यहोमः ।

अथ स्त्रीधर्माः । मनुः ( ५।१४६; १४८ )

" बालया वा युवत्या वा वृद्धया वाऽपि योषिता । न स्वातंत्र्येण कर्तव्यं किंचित्कार्यं गृहेष्वपि ॥
" पित्रा भर्त्रा सुतैर्वाऽपि नेच्छेद्विरहमात्मनः । एषां हि विरहेण स्त्री गर्ह्यं कुर्यादुभे कुले " ॥

याज्ञवल्क्यः ( आ. ८३ )

" संयतोपस्कृता दक्षा हृष्टा व्ययपराङ्मुखी । कुर्याच्छ्वशुरयोः पादवंदनं भर्तृतत्परा " ॥
" नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणं । पतिं शुश्रूषते नारी तेन स्वर्गे महीयते " ॥
" पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा । पतिलोकमभीप्संती नाहितं किंचिदाचरेत् "॥

स्कान्दे

" प्रसुप्तं तु सुखासीनं रममाणं यदृच्छया । आतुरेष्वपि कार्येषु पतिं नोत्थापयेत्क्वचित् ॥
" स्त्रीधर्मिणी त्रिरात्रं तु स्वमुखं नैव दर्शयेत् । स्ववाक्यं श्रावयेन्नापि यावत्स्नाता विशुद्ध्यति ॥
" सुस्नाता भर्तृवदनमीक्षेन्नान्यस्य कस्यचित् । अथवा मनसि ध्यात्वा पतिं भानुं विलोकयेत् ॥
" न रजकया न कारुकया न च श्रमणयाऽपि च । न च दुर्भगया वाऽपि सखित्वं कुरुते तु सा ॥
" भर्तृविद्वेषिणी नारी न संभाषेत कर्हिचित् " । तथा
" उक्ता प्रत्युत्तरं दद्याद्या नारी क्रोधतत्परा । सा शुनी जायते ग्रामे शृगाली निर्जने वने ॥
" पतिं या ताडितुं चेच्छेत्सा व्याघ्री वृषदंशिकेति " । शंखः " नानुक्त्वा गृहान्निर्गच्छेन्नानुत्तरीया न त्वरितं व्रजेन्न परपुरुषं भाषेतान्यत्र वणिक्प्रव्रजितवृद्धवैद्येभ्यो न नाभिं दर्शयेदागुल्फाद्वासः परिदध्यान्न स्तनौ विवृतौ कुर्यान्न हसेदनपावृतं न भर्तारं तद्बंधून्वा द्विष्यात् " ॥

मनुः

" तस्मात्सर्वं परित्यज्य पतिमेकं समर्चयेत् ।
" भुंक्ते भुंक्ते पतौ या तु ह्यासीना वाऽपि वाऽऽसिते । विनिद्रे च विनिद्रा या प्रथमं प्रतिबुध्यते ॥
" अनलंकृतमात्मानं पत्युर्नो दर्शयेत्क्वचित् । आक्रुष्टा वाऽपि नाक्रोशेत् ताडिताऽपि प्रसीदति ॥
" सेवते भर्तुरुच्छिष्टं मिष्टमन्नं फलादिकं । महाप्रसाद इत्युक्त्वा पतिदत्तं प्रतीच्छति "॥
एते पूर्वोक्तनियमा विवाहोत्तरमेव ।

अथ प्रोषितपतिकाधर्माः । याज्ञवल्क्यः ( आ. ८४ )

" क्रीडाशरीरसंस्कारं समाजोत्सवदर्शनं । हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका " ॥
तथा " प्रोषिते मलिना कृशेति " ॥

अथ विधवाधर्माः । मनुः ( ५।१५६–१५७ )

" कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः । न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु ॥
" आसीता मरणात्क्षांता नियता ब्रह्मचारिणी " । तथा
" विधवाकबरीबंधो भर्तृबंधाय जायते । शिरसो वपनं तस्मात्कार्यं विधवया सदा ॥

१ मनु. ५।१५४–१५५

" एकाहारः सदा कार्यो न द्वितीयः कदाचन । कृच्छ्रं पराकं कुर्याच्च तप्तकृच्छ्रमथापि वा ॥
" यवान्नेन फलाहारैः शाकाहारैः पयोव्रतैः । प्राणयात्रां प्रकुर्वीत यावत्प्राणः स्वयं व्रजेत् ॥
" पर्यंकशायिनी नारी विधवा पातयेत्पतिं । तस्माद्भूशयनं कार्यं पतिसौख्यसमीहया ॥
" नैवांगोद्वर्त्तनाभ्यंगं स्त्रिया विधवया क्वचित् । तर्पणं प्रत्यहं कार्यं भर्तुः कुशतिलोदकैः " ॥

तर्पणं पुत्रपौत्राभावे ।

" नाधिरोहेदनड्वाहं प्राणैः कंठगतैरपि । कंचुकं न परीदध्याद्वासो न विकृतं वसेत् ॥
" एवं धर्मसमायुक्ता विधवाऽपि पतिव्रता । पतिलोकमवाप्नोति न भवेत्क्वापि दुःखितेति " ॥

यत्तु ब्रह्मचर्येण सह वैकल्पिकं सहगमनमुक्तं तद्विस्तरेण शुद्धिमयूखे प्रपंचयिष्यामः । इति स्त्रीधर्माः-

अथ विवाहोत्तरं पंचयज्ञानुष्ठानमुक्तमाचारमयूखे दर्शयिष्यामः । अष्टकादिश्राद्धज्ञानं श्राद्धमयूखे । सप्त पाकसंस्था नित्याः । आधानादीनि नित्यानि । यथाह वसिष्ठः (११।४५–४६)

" अवश्यं ब्राह्मणोऽग्नीनादधीत । अग्निहोत्रदर्शपूर्णमासाग्रयणेष्टिपशुसोमांश्च यजेत " ॥

याज्ञवल्क्योपि ( आ. १२५ )

" प्रतिसंवत्सरं सोमः पशुः प्रत्ययनं तथा । कर्तव्याग्रयणेष्टिश्च चातुर्मास्यानि चैव हीति " ॥

तथा नित्यानि कर्माण्युक्त्वा बौद्धायनेनोक्तं

" तस्मात्कंदैः फलैर्मूलैर्मधुनाऽऽज्यरसोद्भवा । नित्यं नित्यानि कुर्वीत न तु नित्यानि लोपयेत् " ॥

यानि तु

" भवेत्त्रैवार्षिकान्नो यः स हि सोमं पिबेद्द्विजः । प्राक्सौमिकीः क्रियाः कुर्याद्यस्यान्नं वार्षिकं भवेत् ॥

तथा । " पुण्यान्यन्यानि कुर्वीत श्रद्दधानो जितेंद्रियः । न त्वल्पदक्षिणैर्यज्ञैर्यजेताथ कथंचन ॥
" अन्नहीनो दहेद्राष्ट्रं मंत्रहीनस्त्वृत्विजं । आत्मानं दक्षिणाहीनो नास्ति यज्ञसमो रिपुः " ॥

इत्यादीनि तानि काम्यपराणि । नित्येषु यथाशक्त्यंगहीनेनाधिकारस्य षष्ठे स्थितत्वात् कंदैर्मूलैरित्यादि च संगच्छते । ' नित्येष्वपि देवताग्निशब्दाक्रियाणां प्रतिनिधिर्नास्ति तथाऽनुपादेयानां कालादीनां न त्याग' इत्यादि स्थितं षष्ठे । इति संस्काराः ।

ब्राह्मणस्य चतस्रो भार्याः क्षत्रियस्य तिस्रो वैश्यस्य द्वे शूद्रस्यैकेति स्थितं । तत्र समानजातिभ्यां पितृभ्यां जातानामपत्यानां समानजातित्वं मातापित्रोर्वैजात्याज्जात्यंतरं च भवतीति स्पष्टं लोके । ता जातीराह याज्ञवल्क्यः ( आ. ९०–९२ )

" सवर्णेभ्यः सवर्णासु जायंते हि सजातयः । अनिंद्येषु विवाहेषु पुत्राः संतानवर्द्धनाः ॥
"विप्रान्मूर्द्धावसिक्तो हि क्षत्रियायां विशः स्त्रियां । अंबष्ठः शूद्र्यां जातो निषादः पारशवोऽपि वा "॥

एकस्यैव नामद्वयं ।

" वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ । वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः "॥

प्रतिलोमजा अप्युक्तास्तेनैव ( आ. ९३–९५ )

" ब्राह्मण्यां क्षत्रियात्सुतो वैश्याद्वैदेहकस्तथा । शूद्राज्जातस्तु चांडालः सर्वधर्मबहिष्कृतः ॥
" क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च । शूद्रादायोगवं वैश्याज्जनयामास वै सुतम् ॥
"माहिष्येण करण्यां तु रथकारः प्रजायते । असत्संतस्तु विज्ञेयाः प्रतिलोमानुलोमजाः"॥ इति ।

प्रतिलोमा असंतोऽनुलोमाः संत इत्यर्थः । एतेषां संकीर्णसंकरभेदादिकमनुपयोगाद्विस्तृतिभयाच्च

* ग–भे

नोक्तं । एतासां च जातीनां मोत्वादिजातिवत्प्रत्यक्षेति स्थितं वार्तिके । कचिज्जातेःशास्त्रगम्यताऽपि । यथोक्तं याज्ञवल्क्येन ( आ. ९६ )

" जात्युत्कर्षो युगे ज्ञेयः सप्तमे पंचमेऽपि वा । व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरमिति "॥ अस्यार्थो **मिताक्षरायां** " सप्तमेऽपि वाशब्दात्षष्ठे पंचमे युगे जन्मनि जातेरुत्कर्षः । पूर्वजात्यपगमोऽन्यजातिप्राप्तिश्च । यथा—ब्राह्मणेन शूद्रायामुत्पादिता निषादी । सा ब्राह्मणेनोढा तस्याः कन्याऽपि ब्राह्मणेनोढा कन्यां जनयति । अनेन प्रकारेण षष्ठी सप्तमं ब्राह्मणं जनयति । एवं ब्राह्मणेन वैश्यायामुत्पादिताऽम्बष्ठा । सा ब्राह्मणेनोढेत्येवं परंपरया षष्ठे ब्राह्मणं जनयति । एवं क्षत्रियायामुत्पादिता मूर्धावसिक्ता । सा ब्राह्मणेनोढा । तत्कन्याऽप्येवमिति पञ्चमे ब्राह्मणं जनयति । एवमुग्रा क्षत्रियोढा माहिष्या च यथाक्रमं षष्ठं पंचमं क्षत्रियं जनयति । तथा करणी वैश्योढा पंचमं वैश्यमिति । इयं च त्रिक् । तद्यथा मूर्द्धावसिक्तेन क्षत्रियोढा तत्पुत्रेणापि क्षत्रियेत्येवंक्रमेण पंचमं क्षत्रियं जनयति । एवमंबष्ठेनोढा वैश्या तत्पुत्रेणापि सत्येवं क्रमेण षष्ठं वैश्यं जनयति । एवं निषादेन शूद्रोढा तत्पुत्रेणापि शूद्रेत्येवं क्रमेण सप्तमे शूद्रं जनयति । एवं मूर्द्धावसिक्तादिष्वपि योज्यं । तथा कर्मणां वृत्त्यर्थानामपकृष्टकर्मणां व्यत्यये साम्यं यज्जातीयवृत्तिपरिग्रहस्तज्जातिप्राप्तिरित्यर्थः । तद्यथा ब्राह्मणः स्ववृत्त्याऽजीवन्नापदि क्षत्रवृत्तिं करोति । गतायामप्यापदि तां न जहाति । तत्पुत्रोऽप्येवमिति क्रमेण पंचमः क्षत्रिय एव जायते । तथा विप्र आपदि वैश्यवृत्त्या जीवंस्तस्यां गतायामपि तां वृत्तिं न जहात्येवं तत्पुत्रोऽपीत्येवं क्रमेण षष्ठो वैश्य एव जायते । एवं शूद्रवृत्त्याऽपि जीवतः । एवं क्षत्रियवैश्ययोरपि योज्यं । अस्मिन्व्याख्यानेऽपिशब्दस्य पक्षपात्वं मूलं मृग्यं । एतेषां वृत्तयस्त्वनुपयोगान्नोक्ताः । इति वर्णजातिविवेकः ।

**अथ साधारणा वर्णधर्माः** । तत्र ब्राह्मणस्य षट् कर्माणि यजनाध्ययनदानयाजनाध्यापनप्रतिग्रहाख्यानि । तेषु त्रीणि वृत्त्यर्थानि । यथाऽऽह **मनुः**

"षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका । याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रह" इति ॥

यजनं तत्र तत्र स्पष्टं । याजनं केषांचित्प्रतिषिद्धं । यथाऽऽह देवलः

'यः शूद्रान्पतितांश्चापि याजयेदर्थकारणात् । याजितो वा पुनस्ताभ्यां ब्राह्मणोऽयाज्ययाजक"॥इति सुमंतुरप्ययाज्यानाह " अभिशस्तपतितपौनर्भवभ्रूणहपुंश्चल्यशुचिवस्त्रकारतैलिकचाक्रिकध्वजिसुवर्णकारवर्मकारवेधक्रिगणगणकगणिकसौनिकव्याधनिषादरजकबुरुडचर्मकारा अभोज्यान्ना अप्रतिग्राह्या अयाज्याश्चेति " ।

तथाऽभिचारयाजनमपि प्रतिषिद्धं । यथाऽऽह मनुः ( ११।१९७ )

" व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च । अभिचारमहीनं वा त्रिभिः कृच्छ्रैर्व्यपोहतीति" ॥

इति याजनम् । दानप्रतिग्रहौ दानमयूखे ज्ञेयौ । अध्ययनाध्यापने पूर्वमुक्ते ।

## आपत्कल्पाः ।

अथ ब्राह्मणस्यापत्कल्पः । तत्र पूर्वोक्तवृत्तित्रयासंभवे मनुः ( १०।८१ )

" अजीवंस्तु स्वधर्मेण ब्राह्मणः स्वेन कर्मणा । जीवेत्क्षत्रियधर्मेण स ह्यस्य प्रत्यनंतर "॥ इति । पुनः स्वकर्मग्रहणं विगुणकर्मसंग्रहार्थं । एतदुक्तं भवति । यथोक्तैः प्रतिग्रहादिभिरजीवन् दुष्प्रतिग्रहादिकमपि कुर्यात् । न त्वन्यवृत्तिं । यथोक्तं भगवता ( अ. १८श्लो० ४५ )' श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितादिति ' । मनुरपि ( १०।९७ )

" वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः । परधर्मात्रयाद्विप्रः सद्यः पतति जातितः " ॥ इति।

---

१ ख-त्रिताः ।

तेनाप्यजीवन्क्षत्रवृत्त्या तथाऽप्यजीवन्वैश्यवृत्त्या । तथोक्तं याज्ञवल्क्येन ( प्रा. ३५ ) ' विशां वाऽप्यापदि द्विज ' इति । वैश्यवृत्तावपि कृषिः कारणीया स्वयं न कार्या । यथोक्तं बृहस्पतिना " कुसीदकृषिवाणिज्यं प्रकुर्वीतास्वयंकृतं । आपत्काले स्वयं कुर्वन्नैव सा युज्यते द्विज "।। इति । तत्रापि नीलीकृषिर्वर्ज्या । " नीलीकर्षणकर्त्ता तु चंडालसदृशो हि सः" इत्यापस्तंबेन निंदितत्वात्। कृषिवर्मानमे वक्ष्यामः । वाणिज्येऽपि विशेषमाह याज्ञवल्क्यः ( प्रा. ३६–३९ )

" फलोपलक्षौमसोममनुष्यापूपवीरुधः । तिलौदनरसक्षारान् दधिक्षीरं घृतं जलं ॥

" रसासवमधूच्छिष्टमधुलाक्षाः सबर्हिषः । मृच्चर्मपुष्पकुतपकेशतक्रविषक्षितीः ॥

" कौशेयनीलीलवणमांसैकशफसीसकान् । शाकार्द्रौषधिपिण्याकपशुगंधांस्तथैव च ॥

" वैश्यवृत्त्याऽपि जीवन्नो विक्रीणीत कदाचनेति " । मनुरपि ( १०।८६–८९ )

" अश्मनो लवणं चैव पशवो ये च मानुषाः । सर्वं च तांतवं रक्तं शाणक्षौमाविकानि च ॥

" अपि चेत्स्युररक्तानि फलमूले तथौषधीः ॥

" अपःशस्त्रं विषं मांसं सोमं गंधांश्च सर्वशः । क्षीरं क्षौद्रं दधि घृतं तैलं मधु गुडं कुशान् ॥

" आरण्यांश्च पशून्सर्वान्दंष्ट्रिणश्च वयांसि च । मद्यं नीलीं च लाक्षां च सर्वांश्चैकशफांस्तथा " ॥

न विक्रीणीयादिति शेषः । तथा ( १०।९१–९३ )

" भोजनाभ्यंजनाद्दानाद्यदन्यत्कुरुते तिलैः । कृमिभूतः श्वविष्ठायां पितृभिः सह मज्जति ॥

" सद्यः पतति मांसेन लाक्षया लवणेन च । त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात् ॥

" इतरेषां तु पण्यानां विक्रयादिह कामतः । ब्राह्मणः सप्तरात्रेण वैश्यभावं नियच्छति " ॥

इतरेषां पूर्वोक्तानां क्षीरव्यतिरिक्तानां । इदमनापदि । रसेषु विशेषमाह स एव ( १०।९४ )

"रसा रसैर्निमातव्या न त्वेव लवणं रसैः । कृतान्नं वा कृतान्नेन तिला धान्येन तत्समा" ॥ इति । वाणिज्यमप्यस्वयंकृतमित्याह गौतमः ' वाणिज्यं कृषिवद्वेति ' अत्यंतापदि तु स्वयमपि कुर्यात् । सर्वासंभवे सेवामप्यनुजानाति प्रचेताः

" महदापद्गतो विप्रः क्षत्रसेवां समाश्रयेत् । शूद्रसेवा न कर्त्तव्या प्राणैः कंठगतैरपि "॥

शूद्रसेवायां प्रायश्चित्ताम्नानादत्यतापदि साऽपि कार्येत्येवं गम्यते । तथाप्यत्यंतापदि चौर्यमनुजानाति याज्ञवल्क्यः ( प्रा. ४३ )

" बुभुक्षितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत् । प्रतिगृह्य तदाख्येयमभियुक्तेन धर्मतः " ॥

अब्राह्मणादिति शूद्राद्धरेत्तदलाभे क्षत्रियादिति निबधंकृतः । मनुः ( ८–३४२;११।१६ ).

" द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके । आददानः परक्षेत्रान्न दंडं दातुमर्हति ॥

" तथैव सप्तमे भक्ते भक्तानि षडनश्नता । अश्वस्तनविधानेन हर्त्तव्यं हीनकर्मण "॥ इति । राजानं प्रत्याह मनुः

" तस्य वृत्तं कुलं शीलं श्रुतमध्ययनं तथा । ज्ञात्वा राजा कुटुंबं च धर्म्यां वृत्तिं प्रकल्पयेदिति"॥

एवं क्षत्रियस्यापादि वैश्यवृत्तिः शूद्रवृत्तिस्तदसंभवे । वैश्यस्यापदि शूद्रवृत्तिः क्षत्रवृत्तिर्वा । न तु ब्राह्मणवृत्तिः । शूद्रस्यापदि वैश्यवृत्तिस्तदसंभवे क्षत्रवृत्तिः । न तु विप्रवृत्तिः । यथोक्तं " उत्कृष्टं वाऽपकृष्टं वा तयोः कर्म न विद्यते । मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते "।। ब्राह्मणस्यापकृष्टं सेवादि नास्ति । शूद्रस्योत्कृष्टमध्ययनादि नास्ति । एवं त्वात्यन्तापदि क्षत्रिय-वैश्ययोर्ब्राह्मणकर्मानुज्ञातं भवति ।

१ ग–पानात् । २ ग–वाकृतान्नेन ।

एवं यथाकथंचिदापदं हित्वा प्रायश्चित्तं कुर्यात्। यथोक्तं याज्ञवल्क्येन ( प्रा. ३५. ) " निस्तीर्य तामथात्मानं पावयित्वा न्यसेत्पथि "। पराशरोऽपि " अशक्तो निंदितं कुर्यात्प्रायश्चित्तं पुनश्चरेदिति "। अतो ज्ञायतेऽनुज्ञानेऽपीषद्दोषोऽस्त्येव। यत्तु "आपद्गतः संप्रगृण्हन् भुंजानो वा यततः। न लिप्येतैनसा विप्रो ज्वलनार्कसमो हि स "॥ इति तत्र सर्वथा दोषाभावप्रतिपादनपरं किंतु 'सर्वत एवात्मानं गोपयेदिति' गोपनस्य पापाभावार्थवादेनावश्यकत्वार्थं। अग्रे प्रायश्चित्ताम्नानात्। एतावान्परं विशेषो यदनापदि कृतानां निंदितानां कर्मणां बहुप्रायश्चित्तमापदि स्वल्पमिति। इत्यापत्कल्पनिरूपणं।

क्षत्रियधर्मा अपि गीतायां ( अ. १८ श्लो. ४३ )
" शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनं। दानमीश्वरभावश्च क्षात्रकर्म स्वभावजमिति "॥
अन्ये च उक्ता नीतिमयूखादौ विस्तरेण वक्ष्यंते च। वैश्यधर्मा उक्ता याज्ञवल्क्येन ( आ. ११९ ) "कुसीदकृषिवाणिज्यं पाशुपाल्यं विशः स्मृतमिति "। भारते वैश्यवाक्यं
" यद्ददामि न तन्न्यूनं यद् गृह्णामि न चाधिकं। विक्रीणामि रसांश्चाहं मद्यवर्जममायथेति "॥
कृष्युपयुक्तहले विशेषमाह हारीतः
" अष्टगवं धर्म्यहलं षड्गवं जीवितार्थिनां। चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनामिति"॥ द्विगवं ब्रह्मघातवन्निंदितमित्यर्थः। इदं च कठिनभूमिविषयत्वेन योज्यं। योज्यवृषान् पराशर आह (२।५)
" स्थिरांगं नीरुजं तृप्तं सनर्दं षंढवर्जितं। वाहयेद्दिवसस्यार्द्धं पश्चात्स्नानं समाचरेत् "। सुनर्दोऽश्रांतः। स्नानं वृषाणां। वर्ज्यानाह स एव ( २।४ )
" क्षुधितं तृषितं श्रांतं बलीवर्दं न योजयेत्। हीनांगं व्याधितं क्लीबं वृषं विप्रो न वाहयेदिति "॥
विप्र इत्युपलक्षणं। भारते
" वाहयेद्दंकुरेणैव शाखया वा सपत्रया। न दंडेन न यष्ट्या वा न पाशेन न दारुणा "॥
खलयज्ञमाह पराशरः ( २।१२ )
" वृक्षं छित्वा महीं भित्वा हत्वा च कृमिकीटकान्। कर्षकः खलयज्ञेन सर्वपापैः प्रमुच्यते "॥
खलयज्ञः खलस्थधान्यदानं। धान्यभाग उक्तः शैवपुराणे
" राज्ञे दत्वा तु षड्भागं देवानां चैकविंशकं। विप्राणां त्रिंशकं भागं सर्वपापैः प्रमुच्यते "॥
देवग्रहणं पितॄणामुपलक्षणमिति धर्मप्रकाशे। एतद्दाने दोष उक्तस्तत्रैव
" अदत्वा कर्षको देवि यस्तु धान्यं प्रवेशयेत्। महद्देशे भवेद्वृक्षः सपुष्पफलवर्जित "॥ इति।
एतादृशस्य फलमुक्तं भारते
" वणिक्धर्मसमुंचन्वै देवब्राह्मणपूजकः। स वणिक् स्वर्गमाप्नोति पूज्यमानोऽप्सरोगणैः "॥
वैपरीत्ये दोषस्तत्रैव
" यः करोति जनान्साधून्वाणिक्कर्मणि वञ्चनम्। स याति नरकं घोरं धनं तस्यापि हीयते "॥ साधूञ्जनान्प्राप्ये यर्थः। उक्ता वक्ष्यमाणाश्च साधारणधर्मा वैश्यस्य भवन्त्येवेति॥

इति वैश्यधर्माः॥

शूद्रधर्ममाह मनुः ( १०।१२३) " विप्रसेवैव शूद्रस्य विशिष्टं कर्म कथ्यत " इति
विष्णुपुराणे
" द्विजशुश्रूषयैवैष पाकयज्ञाधिकारवान्। निजाञ्जयति वै लोकान् शूद्रो धन्यतरः स्मृतः"॥ इति।
द्विजैश्च शूद्रवृत्तिः कार्येत्युक्तं भारते

१ याज्ञवल्कीये प्रायश्चित्ताध्याये श्लो. ४१। २ इद-गीता। ३ 'कीर्तते' इति मुद्रितमनुस्मृतिपुस्तकपाठः।

" यश्च कश्चिद्द्विजातीनां शूद्रः शुश्रूषुराव्रजेत् । कल्प्या तस्य वैनैराद्वृत्तिं धर्मविदो जनाः "॥

गौतमः ( १०।६० ) 'जीर्णान्युपानच्छत्रवासांसि कूर्चानीति'। देयानीति शेषः । कूर्चं तृणमयमासनम् । उपलक्षणं चेदम् । अतश्चापेक्षितं जीर्णं शय्याकम्बलाद्यपि देयम् । वृत्त्यन्तरमाह याज्ञवल्क्यः ( आ. १२० )

" शूद्रस्य द्विजशुश्रूषा तयाऽजीवन्वणिग्भवेत् । शिल्पैश्च विविधैर्जीवेद्द्विजातिहितमाचरन् "॥ इति ।

शूद्रस्य वाणिज्ये प्रसक्ते पूर्वोक्तानां फलोपलादीनां विक्रये न दोषः

" लवणं मधु तक्रं च तैलं दधि घृतं पयः । न दुष्येच्छूद्रजातीनां कुर्यात्सर्वेषु विक्रयम् "॥

इति बृहत्पराशरोक्तेः ( ११६२ ) । कश्चिद्विशेषमाह स एव

" विक्रीणन्मद्यमांसानि ह्यभक्ष्यस्य च भक्षणम् । कुर्वन्नगम्यागमनं शूद्रः पतति तत्क्षणात् ॥
" कपिलाक्षीरपानेन ब्राह्मणीगमनेन च । वेदाक्षरविचारेण शूद्रश्चाण्डालतां व्रजेत् ।" इति ।

एवं च मद्यमांसातिरिक्तं विक्रेयमिति । पुराणादिश्रवणे शूद्रस्याधिकारो नाध्ययने । तथा च भारते

" स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा । तेन भारतमाख्यानं मुनिना कृपया कृतम् ॥
" श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः " ॥ इति । शूद्रं प्रति विशेषमाहाङ्गिराः

" तस्माच्छूद्रं समासाद्य सदा धर्मपथे स्थितम् । प्रायश्चित्त प्रदातव्यं जपहोमविवर्जितम् " ॥ इति ।

स्वयंकर्तृकयोर्जपहोमयोर्निषेधः । अतो ब्राह्मणेन जपे होमे वा कारिते न दोषः । तदुक्तं धर्मविवृतौ

"उपवासो व्रतं होमस्तीर्थस्नानजपादिकम् । विप्रैः संपादितं यस्य संपन्नं तस्य तत्फलम् " ॥ इति ।

शूद्रस्य पञ्चगव्याशनमाह पराशरः ( १२।४ )

"स्त्रीशूद्रस्य विशुद्ध्यर्थं प्राजापत्यं समाचरेत् । पञ्चगव्यं तु कुर्वीत स्नात्वा पीत्वा शुचिर्भवेत्"॥ इति।

यस्त्वत्रिणोक्तम् ( २९४ )

" पञ्चगव्यं पिबेच्छूद्रो ब्राह्मणस्तु सुरां पिबेत् । उभौ तौ पापकर्माणौ पूयाख्ये नरके वसेत् " ॥ इति

तद्विकल्पार्थमिति केचित् । प्रायश्चित्ताङ्गं पञ्चगव्यं प्राश्यमनङ्गं तु नेति व्यवस्थेति धर्मप्रकाशे । युक्तं तु 'कलौ पाराशरी स्मृति'रित्यनेनान्यस्मृतिविरोधे कलौ पराशरस्मृतिर्बलीयसीत्युच्यते । अतः कलौ प्राशनमेव । युगान्तरे तु विकल्प इति । शूद्रस्य सर्वसंस्कारप्राप्तौ केषांचिद्बाधः । तत्र गर्भाधानप्रभृत्यन्नप्राशनान्ताः संस्काराः शूद्रस्य भवन्ति । यत्तु " ब्राह्मणक्षत्रियवैश्यानां गर्भाधानसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचूडोपनयनव्रतचर्याध्ययनसमावर्तनविवाहयज्ञदानानि समानानि " इति सुमन्तुवाक्यम् तत्त्रयाणां मन्त्रवत्संस्कारपरं न शूद्रपरिसंख्यार्थम् । तथा सति तस्य विवाहाप्रसक्तेः । चूडाकरणं तु "चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः " ( २।३५ ) इति मनुवचने द्विजातिग्रहणात् शूद्रस्य नेति मेधातिथिः । अपरार्कस्तु चूडाकरणं मन्त्रसहितं न भवतीत्याह । वसिष्ठस्तु स्पष्टं विकल्पमाह 'परिचये तु शूद्रस्यानियतः केशवेशः' इति । अस्यार्थो धर्मप्रकाशे–केशवेश एका शिखा सोऽनियतो वैकल्पिकः। तस्माच्छिखामात्रधारणं मुण्डनं वेत्यर्थ इति । उपनयनं त्वध्ययनाभावान्नास्ति । मनुरपि (१०।८००) 'चतुर्थ एकजातिस्तु' इति । एकैव जातिर्जननं यस्येत्यर्थः । शूद्रस्य पञ्चमहायज्ञमन्त्रमाह याज्ञवल्क्यः ( आ. १२१ )

" नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत् " । इति ।

---

१ डधफ–तस्य च ते, र–वने । २ डध–छत्र । ३ इडधफर–वास । ४ र–जीर्णशय्या । ५ डधई–स्त्र । ६ धई–सा । ७ डध–नाम् । ८ फ–धर्मप्रकाशे । ९ डधइ–शिखाधारणम् ।

स्वाहास्थाने नमःशब्दः प्रयोक्तव्य इत्यर्थः । देवताभ्यः पितृभ्यश्चेति वा नमस्कारमन्त्र इति विज्ञानेश्वरः । भारते तु "स्वाहाकारो नमस्कारो मन्त्रः शूद्रे विधीयते"। इति स्वाहाशब्दस्यापि विधानाद्विकल्पः । अत्र च 'शूद्रा वाजसनेयिनः' इति वसिष्ठवाक्याधानि तेषां कर्माणि तानि कातीयसूत्रानुसारेण कार्याणीति । वैश्वदेवादौ लौकिकाग्निर्ज्ञेयः । तथा शूद्रस्यागमोक्ता दीक्षा पूजा च भवति । वराहपुराणे त्रैवर्णिकानां दीक्षाविधिमुक्त्वा

"शूद्रस्यापि प्रवक्ष्यामि मद्भक्तस्य वराङ्गने । यां तु दीक्षां समासाद्य मुच्यते सर्वकिल्बिषैः" ॥

इत्युक्तत्वात् । सूतसंहितायामपि त्रैवर्णिकानां मन्त्रपूजामुक्त्वा संन्यासिनां प्रणवेन पूजामुक्त्वा "नमोन्तेन शिवेनैव स्त्रीणां पूजा विधीयते । शिवमन्त्रेण शूद्राणामेवं पूजा प्रकीर्तिता"। इत्युक्तम्

तत्रैव

"शूद्रः कर्मरतस्तेन स्पृश्यमानो द्विजन्मनाम् । हृष्याम्यहं च सुतरां पूज्यमानश्च सुन्दरि ॥

"वर्णत्रयस्य शुश्रूषां शुचिः शूद्रः करोति यः । स्वधर्मस्य स्थितिं ज्ञात्वा तस्य गृह्णाम्यहं बालिम्"॥इति।

भविष्यत्पुराणे

"ब्राह्मणं क्षत्रियं वैश्यं कुलीनं शूद्रमेव तु । पुरुषं वा स्त्रियं वाऽपि दीक्षयेत्सूर्यमण्डले" ॥

आराध्यदेवता सूर्यमण्डले त्वया ध्येया पूज्या वेत्युपदिश्य दीक्षयेदित्यर्थः ।

वराहपुराणे

"ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते । शूद्रादीनां च तच्छ्रोत्रपदवीमुपयास्यति" ॥

इति पञ्चरात्रश्रवणविधानाच्च सौरवैष्णवशैवशाक्तवैनायकमन्त्रेष्वधिकारः सिद्धः । यत्तु पूर्वं सूतसंहितायां पूजनं स्पर्शनं चोक्तं तत्स्वकृतपार्थिवादिविषयम् । यत्तु "केशवं वा शिवं वाऽपि स्पृष्ट्वा नरकमश्नुते" । इति निषेधः सोऽन्यस्थापितपरः स्थावरपरो वा । दीक्षितानां स्थावरेष्वपि ब्राह्मणद्वारा पूजा भवतीति । तथा शूद्रस्य ज्ञानेऽधिकारो महाभारते

"प्राप्य ज्ञानं ब्राह्मणात्क्षत्रियाद्वा वैश्याः शूद्रा अपि नीचा अभीक्ष्णम् ।

"श्रद्धातव्यं श्रद्दधानेन नित्यं न श्रद्धालुं जन्ममृत्यू विशेताम्" ॥ इति ।

यत्तूत्तरमीमांसायामपशूद्राधिकरणे शूद्रस्य ब्रह्मविद्यानधिकार उक्तः स त्रैवर्णिकाविदुपनिषच्छ्रवणादिना न भवतीत्येवंपरः । पुराणादिश्रवणेन तु ब्रह्मज्ञानं केन वार्येत । तेन 'सर्वं ब्रह्मण उत्पन्नं ब्रह्मण्यध्यस्तं मिथ्या ब्रह्मैव सत्यम्' इत्येवंरूपेण निदिध्यासनेन ज्ञानं संपादनीयम् । अत एव 'गीतायाम् (अ. ९ श्लो. ३२)

१ ङघइ-होपयेत् । २ ग-स्थावरे स्फाटिके । विशेषस्त्वाचारमयूखे वक्ष्यते । ३ इ-धव

" मामुपाश्रित्य कौन्तेय येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेपि यान्ति परां गतिम्"॥ इत्युक्तम् । तथा शूद्रेण क्रियमाणे श्राद्धे ब्राह्मणेन मन्त्राः पठनीयाः ।"अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्णते" इति वाराहोक्तेः ।

यत्तु मात्स्ये " शूद्रोऽप्यमन्त्रवत्कुर्यादनेन विधिना ततः " ॥ इति । तत्स्वयं मन्त्रप्रयोगो न कर्तव्य इत्येवंपरम् । सर्वश्राद्धानि चाऽऽमेन भवन्ति ' शूद्रः कुर्यात्सदैव हि ' इत्युक्तेः । यत्तु वाराहे श्राद्धं प्रकृत्य

" त्रिषु वर्णेषु कर्तव्यं पाकभोजनमेव तु । शुश्रूषामभिपन्नानां शूद्राणां च वरानने "॥

इति पाकश्राद्धमुक्तं तच्छूद्रायां द्विजोत्पन्नविषयमिति केचित् । युक्तं तु तस्मिञ्छूद्रत्वाभावात् ' शूद्राश्च पाककर्तारः ' इत्यापस्तम्बोक्तपाककर्तृगोपालादिसच्छूद्रपरमिति । तच्च कलियुगातिरिक्तयुगविषयमिति । यत्तु भविष्यत्पुराणे

" आवाहनादि कर्तव्य यथा शूद्रेण तच्छृणु । देवानां देवनाम्ना तु पितृणां नामगोत्रतः ॥

" पिण्डांश्च निर्वपेद्वीर नामतो गोत्रतस्तथा "॥

इति शूद्राणां गोत्रमुक्तं तत्र केचिद्वदन्ति—'तस्मादाहुः सर्वाः प्रजाः काश्यप्यः ' इति सामान्यदर्शनात्सर्वशूद्राणां काश्यपं गोत्रम् । तस्य च श्राद्ध एवोत्कीर्तनं नान्यत्र ' यावद्वचनं वाचनिकम् ' इति न्यायात् । अन्यथा सर्वशूद्राणामेकगोत्रत्वादविवाहः प्रसज्येतेति । अन्ये तु मुख्यशूद्रस्य सप्तर्ष्यन्यतमापत्यत्वाभावाच्छूद्रायामुत्पन्न. पारसवो गृह्यत इत्याहुः। युक्तं तु ब्राह्मणेनोत्पादितः पारसवस्तेन शूद्रोढा तदुत्पन्नेन पुनः शूद्रोढेत्येव सप्तमे शूद्रो भवति । तस्य परंपरया सप्तर्ष्यन्यतमापत्यत्वेन गोत्रसत्त्वात्त परमेवेति । अन्ये शूद्रधर्मा अशौचादयस्तत्र तत्र वक्ष्यन्ते शान्तिकादावप्यधिकारः शान्तिमयूखे[1] स्थापयिष्यते । अन्ये च

" अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः । दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम् " ॥

इति साधारणधर्मा अपि ज्ञेयाः । इति शूद्रधर्माः ।

अथाश्रमधर्माः । तत्र ब्रह्मचारिधर्मा उक्ताः । गृहस्थो द्विविध उक्तो देवलेन " द्विविधो गृहस्थो यायावरः शालीनश्च । तयोर्यायावरः प्रवरो याजनाध्यापनप्रतिग्रहवर्जनादिति " । तस्य जीवनोपायमाह याज्ञवल्क्यः ( आ. १२८ ) ' जीवेद्वापि शिलोञ्छेन ' इति । गृहीतधान्ये क्षेत्रे पतितमञ्जरीग्रहणं शिलम् । एकैकग्रहणमुञ्छम् । धान्यस्य संचय उक्तस्तेनैव ( आ. १२८ ) " कुशूलकुम्भीधान्यो वा त्र्याहिकोऽश्वस्तनोऽपि वा " ॥ इति । स्वकुटुम्बपोषणपरिमितं द्वादशदिनपर्याप्तमन्नं यः संगृह्णाति स कुशूलधान्यः । षड्दिनपर्याप्तसंग्रहीता कुम्भीधान्यः । त्र्याहिकाश्वस्तनौ स्पष्टौ । एषां मध्ये परः परः श्रेष्ठः । शालीनमाह

---

× ' मां हि पार्थ व्यपाश्रित्य ' इति भगवद्गीतायां पाठः ।

१ ग–पश्यते । २ ङघ–प्राजा । ३ गक–पा:. ।

वैचलः ' षट्कर्मापिहितः प्रेष्यचतुष्पदगृहग्रामधनधान्ययुक्तो लोकानुवर्ती शालीनः ' इति । स चतुर्विधः । यथोक्तं मनुना ( ४।९ )
" षट्कर्मैको भवत्येषां त्रिभिरन्यः प्रवर्तते । द्वाभ्यामन्यश्चतुर्थस्तु ब्रह्मसत्रेण जीवति " ॥ इति । अस्यार्थः—कश्चिद्याजनाध्यापनप्रतिग्रहकृषिवाणिज्यपाशुपाल्यैः षड्भिर्जीवति । अन्यस्त्रिभिः प्रतिग्रहाध्यापनयाजनैः । तृतीयो द्वाभ्यां याजनाध्यापनाभ्यां चतुर्थस्त्वध्यापनेनैवेति । एतेष्वपि परः परः श्रेष्ठः । अन्ये गृहस्थधर्मा उक्ता वक्ष्यन्ते च । इति गृहस्थधर्माः ॥

तृतीयाश्रममाह याज्ञवल्क्यः ( प्रा. ४५ )
"सुतविन्यस्तपत्नीकस्तया वाऽनुगतो वनम् । वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत्" ॥ इति । भार्यायां तिष्ठन्त्यामपि ब्रह्मचारी । तत्कालमाह मनुः ( ६।२ )
" गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः । अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत् " ॥ इति । सुतनिक्षेपादि पत्न्यां विद्यमानायाम् । तत्र कृत्यमाह मनुः ( ६।९ )
" वैतानिकं च जुहुयादग्निहोत्रं यथाविधि । दर्शमस्कन्दयन्पर्व पौर्णमासं च योगतः" ॥ इति । याज्ञवल्क्यः ( प्रा. ४६ )
" अकालकृष्टेनाग्नींश्च पितॄन्देवातिथीनपि । भृत्यांश्च तर्पयेच्छ्मश्रुजटालोमभृदात्मवान् " ॥ मनुः ( ६।३ ) " संत्यज्य ग्राम्यमाहारं सर्वं चैव परिच्छदम् " इति । अत्र संचयमाह याज्ञवल्क्यः ( प्रा. ४७–४९ )
" अह्नो मासस्य षण्णां वा तथा संवत्सरस्य वा । अर्थस्य संचयं कुर्यात्कृतमाश्वयुजे त्यजेत् ॥
" दान्तस्त्रिषवणस्नायी निवृत्तश्च प्रतिग्रहात् । स्वाध्यायवान्दानशीलः सर्वसत्त्वहिते रतः ॥
" दन्तोलूखलिकः कालपक्वाशी वाऽश्मकुट्टकः । श्रौतं स्मार्तं फलस्नेहैः कर्म कुर्यात्क्रियास्तथा" ॥ तितुषीकरणसाधनं दन्ता एवेत्यर्थः । अश्मा पाषाणो वा । कालेन पक्वमश्नातीति कालपक्वाशी । फलमिंगुदादि तस्य स्नेहैः । कर्म श्रौतादि । क्रियाः व्रतार्चनादयः । तथा ( प्रा.५०–५२ )
" चान्द्रायणैर्नयेत्कालं कृच्छ्रैर्वा वर्तयेत्सदा । पक्षे गते वाऽप्यश्नीयान्मासे वाऽहनि वा गते ॥
" स्वप्याद्भूमौ शुची रात्रौ दिवसं प्रपदैर्नयेत् । स्थानासनविहारैर्वा योगाभ्यासेन वा तथा " ॥ रात्रावित्ति दिवसव्यावृत्त्यर्थम् । प्रपदैरटनैः । " ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः" ॥ पञ्चाग्निमध्यस्थो चतुर्दिक्षु चत्वारोऽग्नयः एकः सूर्य इति पञ्च । अन्यत्र द्वादशाग्निमध्योऽपि । तद्यथा—स्वस्य परित एकादशान्यायतनान्येकः सूर्यश्चेति । स्थण्डिलेशय इति आवरणरहिते देशे स्थेयमित्यर्थः । शयनमुपलक्षणम् । तेनोपवेशनाद्यपि ग्राह्यम् ।
" आर्द्रवासास्तु हेमन्ते शक्त्या वाऽपि तपश्चरेत् " ।
"कण्टकैर्यश्च तुदति चन्दनैर्यश्च लिम्पति । अक्रुद्धोऽपरितुष्टश्च समस्तस्य च तस्य च"॥(प्रा.५३) पूर्वं वन्याहारतोक्ता । इदानीं ग्रामादाहृत्याप्याहारं कुर्यादित्याह स एव ( प्रा. ५५ )
"ग्रामादाहृत्य वा ग्रासानष्टौ भुञ्जीत वाग्यतः । वायुभक्षः प्रागुदीचीं गच्छेद्वाऽऽवर्ष्मसङ्क्षयात्"॥ इति । प्रागुदीची ऐशानी । इति वानप्रस्थधर्माः ॥

१ इध–विधिना । २ उधट्टर-रक्षितः ।

संन्यासः ।

संन्यासमाह याज्ञवल्क्यः ( प्रा. ५६–५७ )

" वनाद्गृहाद्वा कृत्वेष्टिं सार्ववेदसदक्षिणाम् । प्राजापत्यां तदन्ते तानग्नीनारोप्य चात्मनि ॥

" अधीतवेदो जपकृत्पुत्रवानन्नदोऽग्निमान् । शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा " ॥ इति ।

"आन्याग्नेयादि गृहात्संन्यासे । वैराग्यं चाधिकारिविशेषणम् । ' यदहरेव विरजेत्तदहरेव प्रव्रजेत् ' इति श्रुतेः । याज्ञवल्क्यः ( प्रा. ६३–६४ )

" अवेक्ष्या गर्भवासाश्च कर्मजा गतयस्तथा । आधयो व्याधयः क्लेशा जरा रूपविपर्ययः ॥

" भवो जातिसहस्रेषु प्रियाप्रियविपर्ययः " इति ।

एतद्विचारे क्रियमाणे वैराग्यं भवतीति । अस्य चातुर्विध्यमाहात्रिः

" चतुर्विधो भिक्षुकः स्यात्कुटीचरबहूदकौ । हंसः परमहंसश्च यो यः पश्चात्स उत्तमः " ॥

क्वचित्कुटीचक इति पाठः । तत्राद्ययोर्द्वयोः शिखासूत्रधारणं पुत्रदत्तान्नभोजनं भवति । परंतु सर्वथासङ्गान्निवृत्त्यर्थमविद्याऽभ्यसनीया । हंसस्तु पुत्रादीनां त्यागं कृत्वा वनादौ वसेत् । शिखासूत्रे वैकल्पिके । परमहंसो मुण्डः सूत्ररहितश्च । सर्वेषां ब्रह्मविद्याभ्यासस्तुल्यः । अस्माभिस्तु प्रायशः परमहंसधर्मा एवोच्यन्ते । त उक्ता श्रुतौ " सोऽथ परिव्राडेकशाटीपरिहितो मुण्डो दृढव्रतोऽरण्यनित्यो भिक्षार्थं ग्रामं प्रविशेदा सायं प्रदक्षिणेनाविचिकित्सन्सार्ववर्णभैक्षचर्यमभि-शस्तपतितवर्जमयज्ञोपवीती शौचनिष्ठः काममेकं वैणवं दण्डमाददीत ' इति । 'सार्ववर्णमापदि' तत्र ब्राह्मणग्रहणम् । काममिति वैकल्पिकदण्डग्रहणम् । परमहंसस्यायमेक एव दण्डः । त्रिदण्डादिकं हंसादीनाम् । अत एव परमहंससंन्यासग्रहणे तेषां त्याग उक्तः । अत ऊर्ध्वं यज्ञोप-वीतमासनं शिखां यष्टयः शिक्यमित्येतानि वर्जयित्वाऽथ दण्डमादत्ते ' सखा मां गोपायति ' इति । संन्यासश्च ज्ञानप्रतिबन्धकदुरितनाशद्वारा ज्ञानसाधनमिति स्थितमुत्तरमीमांसायाम् । जन्मान्तरीयः संन्यासोऽन्यजन्मन्युपयुज्यते । तथा च श्रूयते " यद्यातुरः स्यान्मनसा वाचा वा संन्यसेत् " इति । अयं च संन्यासो न पूर्वसंन्यासापेक्षया कर्मान्तरम् । पूर्वस्यापरिचितत्वाद्भेदे प्रमाणाभावाच्च । अतः पूर्वोत्पन्नस्य संन्यासस्य यदि ' ब्राह्मणो यजेत ' इत्यादिवदातुरकर्तृकप्रयोगान्तरं विधीयते तत्रापि वैराग्यमपेक्षितमेव । न चातुरस्य वैराग्यसत्त्वे ' यदहरेव विरजेत्तदहरेव प्रव्रजेत् ' इत्यनेनैव प्राप्तेरनर्थकं पुनर्विधानमिति वाच्यम् । संन्यासस्य कात्स्न्येन सर्वाङ्गोपसंहारासमर्थमातुरं प्रत्यप्राप्तेः । अतोऽर्थवद्वचनमिति । विस्तरस्तु दुर्गमत्व-भिया नेह प्रतन्यते । अङ्गिरा अपि

" अन्धः पङ्गुर्दरिद्रो वा विरक्तः संन्यसेद्द्विजः । सर्वेषामेव वैराग्यं संन्यासे तु विधीयते " ॥ इति ।

सुमन्तुः

"आतुराणां च संन्यासे न विधिर्नैव च क्रिया । प्रैषमात्रं समुच्चार्य संन्यासं तत्र कारयेत्" ॥ इति ।

तत्र संन्यासाङ्गभूतं श्राद्धं वक्ष्यते । गोभिलः

"ततः समाचरेत्स्नानं हेमरूप्यकुशाम्भसा । कृत्वा तु वपनं विद्वान्भवेन्मुण्डोऽथवा ~ ~ " ॥

*एतच्चिह्नान्तर्गतपाठः कघहर पुस्तकेषु नात्र दृश्यते किंतु अ

१ ए ॥चारि । २ कघफर–पाठयात् । ३ गम्श्राद्धमयूखे ।

बह्वृचगृह्यपरिशिष्टे 'अथ पुत्रान्सुहृदो बन्धूनत्याह न मे कश्चिन्नाहं कस्यचित्' इति । ततः 'पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थितोऽहम्' इति अपः पाणिना हुत्वा शिखार्थं रक्षितान्केशानुत्पाट्याथ यज्ञोपवीतं भूमावप्सु वा निक्षिपेत् । ततः प्राङ्मुखस्तिष्ठन्नूर्ध्वबाहुर्ब्रूयात् 'संन्यस्तं मया' इति त्रिः । 'अभयं सर्वं भूतेभ्यो मत्तः' इति उदकपूर्णमञ्जलिं निनयेत् ।

अथ नामानि

"तीर्थाश्रमवनारण्यगिरिपर्वतसागराः । सरस्वती भारती च पुरी नाम यतेर्दश" ॥ इति । ततो गुरुरद्वैतब्रह्मोपदेशं कुर्यात् । ततो नग्न उदीचीं दिशं गच्छेत् । यदि विविदिषुस्ततः श्रवणार्थं गुरुसमीपमागच्छेत् । उक्तं च 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इति । ततः कौपीनं कटिसूत्रं चोपाददीत । अत्रिर्विशेषमाह

"कौपीनाच्छादनं वासः कन्था शीतनिवारिणी । पादुके चापि गृह्णीयात्कुर्यान्नान्यस्य संग्रहम्" ॥ इति ।

गुरोश्च सेवा कायवाङ्मनोभिः कार्या । एवं संन्यस्तस्य धर्मानाह पराशरः

"*एकाकी निस्पृहस्तिष्ठेन्न केनापि सहालपेत् । दद्यान्नारायणेत्येवं प्रतिवाक्यं सदा यतिः" ॥

दक्षः ( ७।३५ ) १

"एको भिक्षुर्यथोक्तस्तु द्वावेव मिथुनं स्मृतम् । त्रयो ग्रामः समाख्यात ऊर्ध्वं तु नगरं स्मृतम्" ॥ इति ।

याज्ञवल्क्यः ( प्रा. ५९ )

"अप्रमत्तश्चरेद्भैक्षं सायाह्ने नाभिलक्षितः । रहिते भिक्षुकैर्ग्रामे यात्रामात्रमलोलुपः" ॥

यात्रामात्रं कुर्यात् प्राणयात्राम् । अतितृष्णया न भुञ्जीतेत्यर्थः ।

वसिष्ठः ( १०।७ ) "सप्तागाराण्यसंकल्पितानि चरेद्भैक्षमेकवारम्" ॥ इति ।

तत्कालमाह मनुः ( ६।५६ )

"विधूमे सन्नमुशले व्यङ्गारे भुक्तवज्जने । वृत्ते शरावसंपाते नित्यं भिक्षां यतिश्चरेत्" ॥ इति ।

तथाष्टौ मासान् कीटवत्परिचरेत् । चतुरो वार्षिकान्मासानेकत्र तिष्ठेत् इति । चत्वारः श्रावणादिकार्तिकान्ताः । तत्र च मासचतुष्टयपर्यन्तं केशनखादिधारणम् । अन्यत्र तु 'ऋतुसन्धिषु वापयेत्' इति मासद्वयोत्तरम् । केचित्तत्रापि 'पक्षा वै मासा' इति लिङ्गदर्शनान्मासमात्रमेवानुतिष्ठन्ति । पात्राण्याह याज्ञवल्क्यः ( प्रा. ६० )

"यतिपात्राणि मृद्वेणुदार्वलाबुमयानि च । सलिलैः शुद्धिरेतेषां गोवालैश्चावघर्षणम्" ॥ इति ।

यतेस्ताम्बूलं निषिद्धं वायुपुराणे

"द्वावेतौ समवीर्यौ तु सुराताम्बूलमेव च । तस्मात्सर्वप्रयत्नेन ताम्बूलं वर्जयेद्यतिः" ॥

तथा सर्वदा प्रणवजपपूर्वं ब्रह्मानुध्यानरतो भवेत् । गयायां यतेर्विशेषः

"गयायां मुण्डपृष्ठे च कूपे यूपे वटे तथा । दण्डं प्रदर्शयेद्भिक्षुः पितृभिः सह मुच्यते" ॥

प्रदर्शयेत्स्पर्शयेत् । एवं संन्यासपूर्वकं जातस्य ज्ञानस्य फलमुक्तं श्रुतौ 'ब्रह्मसंस्थोऽमृतत्वमेति' इति । जाबालश्रुतौ

१ इध-यमः । २ ग-कार । *गफल-पाठः ।

" शतं कुलाना पुरतो बभूव तथा पराणां त्रिशतं समग्रम् ।
" एते भवन्ति सुकृतस्य लोके येषां कुले संन्यसतीह विप्रः " ॥ इति ।

यतिमरणे विशेषः

" सर्वसङ्गनिवृत्तस्य ध्यानयोगपरस्य च । न तस्य दहनं कार्यं नाशौचं नोदकक्रिया ॥
" निदध्यात्प्रणवेनैव ध्यायन् भिक्षोः कलेवरम् । प्रोक्षणं खननं चैव सर्वं तेनैव कारयेत् " ॥ इति ।

एते च संक्षेपेणोक्ता यतिधर्माः । विस्तरस्तु विश्वेश्वरनिबन्धादौ द्रष्टव्यः ।

इति भगवंतभास्करे संस्कारनिरूपणं ।

अथ पूर्वोद्दिष्टाना संस्काराणां कातीयसूत्रानुसारेण प्रयोगो लिख्यते

तत्र परिभाषासूत्रं । "अथातो गृह्यस्थालीपाकानां कर्म परिसमूह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्याग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य्य प्रणीय परिस्तीर्यार्थवदासाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्यार्थवत्प्रोक्ष्य निरूप्याज्यमधिश्रित्य पर्यग्नि कुर्यात् । स्रुवं प्रतप्य संमृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यादाज्यमुद्वास्योत्पूयावेक्ष्य प्रोक्षणीश्च पूर्ववदुपयमनान् कुशानादाय समिधोऽभ्यादाय पर्युक्ष्य जुहुयादेष एव विधिर्यत्र क्वचिद्धोम " इति । ब्रह्मासने ब्रह्मोपवेशनीय. ॥

अथ सर्वत्रोपयुक्तः स्थालीपाकप्रयोगः । तत्र प्रथमारंभे पुण्याहमातृपूजाभ्युदयिकानि कृत्वा देशकालौ स्मृत्वा अमुकस्थालीपाकेन यक्ष्य इति संकल्प्य अमुककर्मणि कृताकृतप्रत्यवेक्षणार्थं ब्रह्माणं त्वां वृणे इति ब्रह्माणं वृत्वा शुद्धायां भूमौ दर्भैस्त्रिः परिसमुह्योपलिप्य स्फ्येनोल्लिख्यानामिकांगुष्ठेनोद्धृत्याद्भिरभ्युक्ष्याग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य्य तत्र ब्रह्माणमुपवेश्य प्रणीताः प्रणयेत् । तद्यथा वामहस्ते वारणं चमसमादाय दक्षिणेन जलं संपूर्याग्नेरुत्तरतो निधाय जलं स्पृष्ट्वाऽग्नेरीशान्यां स्थापयेत् । ततः प्रागग्रैः कुशैः परिस्तरणं । तत उत्तरतोऽग्नेरर्थवतां पात्राणामासादनं । तद्यथा पवित्रछेदनकुशाः पवित्रे तु प्रोक्षणीपात्रमाज्यस्थालीसंमार्गकुशा उपयमनकुशाः समिधस्तिस्रः प्रादेशमात्र्यः खादिरः स्रुवः आज्यं तंडुलाः पूर्णपात्रं चेत्येतान्यासादयेत् । ततस्त्रिभिः कुशैः कुशद्वयं छित्वा प्रादेशमात्रं स्थापयेत् । ततः प्रोक्षणीपात्रे प्रणीतोदकमासिच्य पवित्राभ्यामुत्पवनं । तदेव पात्रं सव्यहस्ते निधाय सव्यहस्तस्थितस्यैव दक्षिणेनोद्गिंगनं । ततो भूमौ निधाय प्रणीतोदकेन प्रोक्षेत् । तत आसादितानामेकैकस्य प्रोक्षण प्रोक्षण्युदकेन । ततः प्रणीताग्न्योर्मध्ये प्रोक्षणीपात्रस्य निधानं । तत आज्यस्थाल्यामाज्यनिर्वापः । चरुस्थाल्यां तंडुलप्रक्षेपः । त्रिः प्रक्षालनं । आज्याधिश्रयणं । आज्यादुत्तरतश्चरोरधिश्रयणं । उभयोः पर्यग्निकरणं । उदकोपस्पर्शनं । चरुश्रपणं कृत्वाऽर्द्धशृते चरौ स्रुवप्रतपनं संमार्गकुशैः संमार्जनं । अग्रैरग्रं मूलैर्मूलं प्रणीतोदकेनाभ्युक्ष्य पुनः प्रतप्य निदधाति । आज्योद्वासनं । ततश्चरोद्वासनं । शृतानां तु पूर्वेणोद्वासितानां तु पृष्ठतः । पवित्राभ्यामाज्योत्पवनं । ततो वेक्षणं । तत आज्यमध्ये पतितापद्रव्यनिरसनं । प्रोक्षण्युत्पवनं । उपयमनकुशादानं । ततस्तिस्रः समिधोऽभ्याधाय प्रोक्षण्युदकेनाग्निं पर्युक्षेत् । पवित्रयोः प्रणीतामध्ये निधानं । ततो दक्षिणं जान्वाच्य स्रुवेणाज्यमादाय जुहोति 'प्रजापतये स्वाहेति' पश्चिमत

१ फ–लक्षणानुसारेण । २ गह्ल–पांठ· । ३ फ–र्दा । ४ फ–र्थवत्प्रोक्ष्यनिरूप्याज्य । ५ फ–मातृका । ६ फ–वारण । ७ फ–च, ग–द्वे । ८ ह्ल–श्रपणं । ९ ह्ल–श्रपण । १० ह्ल–घृते । ११ फ–अग्रे, ह्ल–अग्रे । १२ ह्ल–घृतानां ।

आरभ्य पूर्वपर्यंतमाघारयेत् । 'इदं प्रजापतये न ममेति' त्यागः । संस्रवं प्रोक्षणीमध्ये स्थापयेत् । एवं सर्वत्र. 'इंद्राय स्वाहेति' तथैव ।.'इदमिंद्राय न ममेति' एतावाघारौ । 'अग्नये स्वाहेति' पूर्वोत्तरतः । 'सोमाय स्वाहेति' पूर्वदक्षिणतः । एतावाज्यभागौ । ततो यथाप्रधान-होमः । ततोऽग्नये स्विष्टकृते स्वाहेति स्विष्टकृत् । आज्यहोमे स्विष्टकृत् । सर्वहोमांते भवति । ततो व्याहृतिभिराज्यं जुहुयात् । 'भूः स्वाहा' इदमग्नये । 'भुवः स्वाहा' इदं वायवे । 'स्वः स्वाहा' इदं सूर्याय । 'भूर्भुवःस्वः स्वाहा' इदं प्रजापतये । ततः 'त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेलोऽवया सिसीष्ठाः । यजिष्ठो वन्हितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्म-त्स्वाहा' इदमग्नीवरुणाभ्यां । 'स त्वं नो अग्ने वमो भवोती नेदिष्ठोअस्या उषसो व्युष्टौ । अव यक्ष्वणो वरुणꣳ रराणो वीहि मृळीकꣳ सुहवो न एधि स्वाहा' इदमग्नीवरुणाभ्यां न मम । 'अयाश्चाग्नेस्यनभिशास्तिपाश्च सत्यमित्वमया असि । अयानो यज्ञं वहास्ययानो धेहि भेषजं स्वाहा' इदमग्नये अयसे । 'ये ते शतं वरुणं ये सहस्रं यज्ञियाः पाशा वितता महांतः । तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुंचंतु मरुतः स्वर्काः स्वाहा' इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो मरुद्भ्यः स्वर्केभ्यो न मम । 'उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमं श्रथाय । अथावयमादित्य व्रते तवानागसो अदितये स्याम स्वाहा' इदं वरुणायादितये । 'प्रजापतये स्वाहा' इदं प्रजापतये । एता आज्याहुती-र्ब्राह्मणान्वारब्धो जुहोति । ततः संस्रवप्राशनं । पवित्रेऽग्नौ प्रहरति । ब्रह्मणे पूर्णपात्रं दक्षिणा । प्रणीताविमोकः । उपयमनस्याग्नौ प्रक्षेपः । यत्र ब्राह्मणभोजनमाम्नातं तत्र तत्कुर्यात् । इति सकलस्थालीपाकेतिकर्तव्यता । आज्यहोमे चरुसंबद्धपदार्थनिवृत्तिः । अन्यत्समानं ॥

## अथ पुंसवनं ॥

गर्भाधानोत्तरं द्वितीये तृतीये वा मासि पूर्वोक्तकाले कर्त्ता शुचिर्गर्भिणीमुपवासं कारयित्वा स्नापयित्वाऽहते वाससी परिधाप्य कालाद्युल्लिख्य 'अस्य गर्भस्य बीजगर्भसमुद्भवैनो-निबर्हणार्थं पुंसवनं करिष्ये' इति संकल्प्य पुण्याहमातृपूजाभ्युदयिकानि कृत्वाऽवरोहाग्रपल्लवानु-दकेन पिष्ट्वा 'हिरण्यगर्भोऽद्भ्यः संभृत' इति द्वाभ्यामृग्भ्यां पत्न्या नासिका-दक्षिणपुटे आसिंचेत् । अथ 'यदि मे वीर्यवान् पुत्रो भवत्विति कामना तत उदकपूर्णं शरावं बध्वा उपस्थे स्थापयित्वा 'सुपर्णोऽसीति' विकृतिच्छंदस्कया 'स्वःपते' त्यंतया गर्भाशयं स्पृष्ट्वा अभिमंत्रयेत् ॥

॥ इति पुंसवनं ॥

## अथ सीमंतोन्नयनं ॥

कर्त्ता शुचिर्दर्भपाणिर्देशकालौ स्मृत्वा 'बीजगर्भसमुद्भवैनोनिबर्हणार्थं परमेश्वरप्रीत्यर्थं सीमंतो-न्नयनं करिष्ये' इति संकल्प्य पुण्याहवाचनमातृपूजाभ्युदयिकानि कृत्वा पंच भूसंस्कारान्कृत्वा लौकिकाग्निमुपसमाधायाज्यभागांतं कृत्वा तिलमुद्गमिश्रेण चरुणा 'प्रजापतये स्वाहे'ति जुहुयात् । 'इदं प्रजापतये' इति त्यागः । तत उत्तरार्धात्स्विष्टकृतं हुत्वा व्याहृत्यादि नवाहुतीर्हुत्वा संस्रवं प्राश्य ब्रह्मणे पूर्णपात्रं वरं वा दत्वाग्नेः पश्चात्कोमलासने भद्रपीठाख्ये गर्भिणीं स्नातामहतवस्त्रामुपवेश्य

१ ग—ततः प्रधानहोमः; फ—ततो यथा प्रधानहोमः । २ फ—नये । ३ ह्य—द्धे । ४ ग—न्यमोपाऽसरे हाम । ५ फ—त् ।

औदुंबरेण युग्मफलवता अपक्कस्तबकेन अश्वत्थशंकुना त्रिभिश्च दर्भपिंजूलैश्चेण्या शलल्या सूत्रकर्त्तनार्थया च सूच्या इत्येतैरेकीकृतैस्ततः। सीमंत विनयति ' भूर्भुवःस्वर्विनयामीति ' मंत्रेण यद्वा ' भूर्विनयामि ' ' भुवर्विनयामि ','स्वर्विनयामीति ' त्रिभिर्मंत्रैस्त्रिर्विनयति । ततस्तःसर्वं वेण्यां बध्नाति । ' अयंमूर्जावतो वृक्ष उर्जीव फलितो भवेति ' मंत्रेण । ततो वीणागाथिनौ प्रति ' राजान संगायेतामिति ' प्रैषं ददाति । यद्वा ' सोमं राजानं संगायेतामिति ' प्रैषः । तौ च प्रेषितौ "सोम एव नो राजेमा मानुषीः प्रजाः। अविमुक्तचक्र आसीरंस्तीरे तुभ्यमसाविति", गाथां गायतः । असौ स्थाने समीपावस्थितायाः गंगाप्रमुख्या नद्या नाम गृह्णाति स्त्री ॥ ॥इतिसीमंतः ॥

अथ सोष्यंती ॥ कर्त्ता शुचिः प्रसूतिशूलवतीं स्त्रियं " एजतु दशमास्यः" इत्यृचा ' अस्रज्जरायुणा सहे 'त्यंतयाऽद्भिरभ्युक्षति । ततः स्त्रीसमीपे " अवैतु पृश्निशेवल[4]शुने जराय्वत्तवे नैव मांसेन पीवरी न कस्मिंश्च नायतनमजरायु पद्यतामिति " मंत्रं जपेत् ॥

अथ जातकर्म । अथ कुमारे जाते नालछेदात्पूर्वं स्नात्वा पुण्याहवाचनवृद्धिश्राद्धादि कृत्वा ' जातकर्म करिष्ये ' इति संकल्प्य मेधाजननायुष्ये कुर्यात् । मेधाजननं यथा । अनामिकया सुवर्णांतर्हितया मधुघृते मिश्रयित्वा केवलं वा घृतं ' भस्त्वयि दधामि । भुवस्त्वयि दधामि । स्वस्त्वयि दधामि । भूर्भुवः स्वस्त्वयि दधामीति ' मंत्रेण सकृत्प्राशयेत् । आयुष्यं यथा । कुमारस्य नाभिसमीपे कर्णसमीपे वाऽ'ग्निरायुष्मानि'त्यष्टौ मंत्रान् त्रिर्जपेत् । ते यथा । ' अग्निरायुष्मां स्सवनस्पतिभिरायुष्मांस्तेन त्वा युषाऽयुष्मंतं करोमि । सोम आयुष्मान्स ओषधीभिरायुष्मांस्तेन त्वा युषायुष्मंतं करोमि । ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तेन त्वाऽयुषायुष्मत्करोमि । देवा आयुष्मंतस्तेऽमृतेनायुष्मंतस्तेन त्वा युषायुष्मंतं करोमि । ऋषय आयुष्मंतस्ते व्रतैरायुष्मंतस्तेन त्वा युषायुष्मंतं करोमि । पितर आयुष्मंतस्ते स्वधाभिरायुष्मंतस्तेन त्वा युषायुष्मंतं करोमि । यज्ञ आयुष्मान्सद्दक्षिणाभिरायुष्मांस्तेन त्वा युषायुष्मंतं करोमि । समुद्र आयुष्मान्स्रवंतीभिरायुष्मांस्तेन त्वा युषायुष्मंतं करोमि ' । तत ' त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं । यद्देवेषु त्र्यायुषं तन्नो अस्तु त्र्यायुषमिति ' मंत्रं जपति । यदि पिता कामयेतायं कुमारः सर्वमायुरियादिति तदा कुमारमभिमृशे ' द्दिवस्परी ' त्यनुवाकेन । अथ चतुरो ब्राह्मणान् कुमारस्य चतुर्दिक्षु एकं च मध्ये स्थापयित्वा इममनुप्राणितेति तान् प्रेष्यति । ततः पूर्वादिदिग्वस्थिता ब्राह्मणाः क्रमेणैव कुमारं लक्षीकृत्य चतुरो मंत्रान्पठंति ' प्राणः व्यानः अपानः उदानः ' मध्यस्थः पंचमः उपरिष्टादवेक्षमाणो ' समानः 'इति । ब्राह्मणाभावे स्वयमेव तस्यां दिशि स्थित्वा मंत्रान्ब्रूयात् । तदा न प्रैषाभावः । ततो यस्मिन्देशे कुमारो जातस्तं देशं ' वेद ते भूमि हृदयं दिवि चंद्रमसि श्रितं " । वेदाहं तन्माता त्रियात्पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतमिति ' मंत्रेणाभिमंत्रयेत् । ' अश्माभव । परशुर्भव । हिरण्यमश्रुतं भव । आत्मा वै पुत्र नामासि । सजीव शरदः शतमिति ' मंत्रेण कुमारमभिमृशति । ततः कुमारस्य मातरं ' इडासि मैत्रावरुणी वीरे वीरमजीजनथाः । सा त्वं

१ फ–तस्या । २ फ–सर्वं । ३ फह–त्रिभि । ४ फ–अय । ५ फ–दक्षिणकर्ण । ६ ह–मृतेभिरायुष्म । ७ फ–अत्र यदि । ८ फ–इदं । ९ फ–नमिति । १० फ–श्रिय । ११ ह–मातस्त्वे ।

चीरवती भव याऽस्मान्वीरवतोऽकरादिति ' मंत्रेणाभिमंत्रयेत् । अथ सूतिकाया दक्षिणं स्तनं प्रक्षाल्य
'इमं स्तनमि 'त्यृचा कुमाराय प्रयच्छति । ततो ' यस्ते स्तन ' इत्यृचा द्वयेन वामं प्रक्षाल्य
प्रयच्छति । ततः कुमारस्य शिरः प्रदेशे जलपूर्णं पात्रं ' आपोदेवेषु जाग्रथ यथादेवेषु जाग्रथ ।
'एवमस्या[५] सूतिकायां सपुत्रिकायां जाग्रथे'ति मंत्रेण स्थापयेत् । तदुत्पात्रं यावत्सूतिकोत्थानं
तावत्तिष्ठेत् । ततः सूतिकागृहद्वारे पूर्वोक्तान्पंचभूसंस्कारान्कृत्वाऽग्निं स्थापयेत् । ततः
तंडुलकणमिश्रान्सायंप्रातर्जुहोति । सायमाहुतिद्वयं प्रातश्चेति तद्यथा 'शंडामर्का उपवीरः शौंडि-
केय उलूखलः । मलिम्लुचो द्रोणासश्च्यवनो नश्यतादितः स्वाहा ' ॥ १ ॥ ' आलिखन्ननिमिषः
किंवदंत उपश्रुतिः । हर्यक्षः कुंभीशत्रुः पात्रपाणिर्नृमणिर्हंत्रीमुखः सर्षपारुणश्च्यवनो नश्यतादितः
स्वाहा ' ॥ २ ॥ ' इदमग्नय ' इत्युभयत्र त्याग इति हरिहरः ॥
अथ नैमित्तिकं । यदि कुमारग्रहो बालमभिमवेत्तदा मत्स्यग्रहणजालेनोत्तरीयेण वाते
प्रच्छाद्यांके गृहीत्वा वक्ष्यमाणं जपेत् ।
" कूर्कुरः सकूर्कुरः कूर्कुरो बालबंधनः । चेचेच्छुनक सृज नमस्ते अस्तु
सीसरोलपेतापव्हर तत्सत्यं ॥
यत्ते देवा वरमददुः स त्वं कुमारमेवावृणीथाः । चेचेच्छुनक सृज नमस्ते अस्तु
सीसरोलपेतापव्हर तत्सत्यं ॥
यत्ते सरमा माता सीसरः पिता श्यामशबलौ भ्रातरौ । चेचेच्छुनक सृज नमस्ते अस्तु
सीसरोलपेतापव्हरेति " ॥ ततो ' न नामयति न रुदति न हृष्यति न ग्लापयति । यत्र वयं वदामो
यत्र चाभिमृशामी ' त्यनेन बालमभिमंत्रयेत् । इति जातकर्मादि ॥

सूतकांते सूतिकामुत्थाप्य नामकरणांगतया त्रीन् ब्राह्मणान्भोजयित्वा शुचिर्देशकालौ स्मृत्वा
" बालस्य बीजगर्भसमुद्भवैनोनाशार्थं नाम करिष्य " इति संकल्प्य पुण्याहवाचननांदीश्राद्धादि
कृत्वा नाम कुर्यात् । अत्रायं शिष्टाचारः । पिप्पलपत्रादौ करिष्यमाणनाम लिखित्वा संपूज्य
ब्राह्मणानुज्ञातो बालस्य दक्षिणे कर्णे कथयेत् । ' वेदनामासीति '॥
अथ निष्क्रमणं । चतुर्थे मासि शुभे दिने शुचिर्नांदीश्राद्धांतं कृत्वा बालकं ' तच्चक्षुरिति '
मंत्रेण सूर्यं दर्शयति । यदि पिता प्रोषितः पुत्रजन्मोत्तरं गृहे आगच्छति तदा गृहोपस्थापनं
कुर्यात् । ' गृहा मा बिभीतेति ' । ततः पुत्रं दृष्ट्वा ' अंगादंगात्संभवसि हृदयादधिजायसे ' ।
आत्मा वै पुत्र नामासि स जीव शरदः शतमिति ' जपेत् । ततः ' प्रजापतेष्ट्वा हिंकारेणाव-
जिघ्रामि । सहस्रायुषाऽमुकशर्मन् स जीव शरदः शतमिति ' मंत्रेण कुमारस्य मूर्द्धानं जिघ्रेत् ।
ततः पुनर्गवां त्वां हिंकारेणावजिघ्रामि सहस्रायुषामुकशर्मन् जीव शरदः शतमिति ' मंत्रेण
सकृन्मूर्द्धानमवजिघ्रति द्विस्तूष्णीं ततो बालस्य दक्षिणे कर्णे ' अस्मे प्रयंधि मघवन्नृजीषि-
न्निंद्र रायो विश्व वारस्य भूरेः । अस्मे शत[७] शरदो जीवसेधा अस्मै वीरांच्छश्वत इंद्र शिप्रिन्निति'
मंत्रं जपेत् । ततः सव्ये ' इंद्र श्रेष्ठानि द्रविणानि धेहि वित्तं दक्षस्य सुभगत्वमस्मे । पोषं रयीणा-
मरिष्टं तनूनां स्वाद्मानं वाचः सुदिनत्वमन्हामिति ' जपेत् । कन्यायास्तु मूर्द्धावघ्राणमात्रं
न मंत्रजापः ॥

१ फ—स्थाप्य । २ फ—कर्मा । ३ ह्ल—चा, फ—वाचाभि । ४ फ—तद्यायं । ५ गङ्ग—श्राद्धं । ६ फ—ते ।
७ फ—तदतितदत्तणीं । ८ फ—वानरस्य । ९ ग—जप ।

विद्याय तिष्ठते वा पादोपसंग्रहपूर्वकमुपसन्नायाचार्यमीक्षमाणाय स्वयमीक्षिताय बटवे ॐका व्याहृतिपूर्वकं प्रथमं पच्छः द्वितीयमर्द्धर्चशस्तृतीयं सर्वां ऋचं च पठन् सावित्रीमुपदिशेत्। अ बटुः पूर्वाभिमुखो दक्षिणहस्तेन 'अग्ने सुश्रवसं मा कुरु यथा त्वमग्ने सुश्रवः सुश्रवा असि। ए मां सुश्रवः सौश्रवसं कुरु। यथा त्वमग्ने देवानां यज्ञस्य निधिपा असि। एवमहं मनुष्याणां वेदस निधिपो भूयासमि'त्येतैः पंचभिर्मंत्रैः प्रतिमन्त्रमिन्धनप्रक्षेपेणाग्निं संधुक्ष्याद्भिः पर्युक्ष्य तिष्ठन् 'अग्न समिधमाहार्षं बृहते जातवेदसे। यथा त्वमग्ने समिध्य स एवमहमायुषा मेधया वर्चसा प्रजय पशुभिर्ब्रह्मवर्चसेन समिंधे जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकारिष्णुर्यशस्वी तेजस्वी ब्रह वर्चस्यन्नादो भूयास१ स्वाहे 'त्यनेन मंत्रेणोक्तलक्षणामेकां समिधमग्नावादध्यादनेनैव द्वितीय तृतीयां चादध्यात्। 'एषा ते अग्ने समिदि'त्यादिना वा मंत्रेण। 'अग्नये समिधमाहार्षमिति' 'एषा अग्ने समिदि'त्येताभ्यां समुच्चिताभ्यां मंत्राभ्यां वा एकैकशस्तिस्रः समिध आदध्यात्। अथोप विश्य पूर्ववत् 'अग्ने सुश्रव' इत्यादिभिरग्निं संधुक्ष्य पर्युक्ष्य तूष्णीं पाणी प्रताप्य 'तनूपा अग्नेऽसि तन मे पाहि। आयुर्दा अग्नेऽस्यायुर्मे देहि। वर्चोदा अग्नेऽसि वर्चो मे देहि। अग्ने यन्मे तन्वा ऊ नन्तन्म आपृणामेधां मे देवः सविता आदधातु मेधां मे देवी सरस्वती आदधातु। मेधां मे अश्विन देवावाधत्तां पुष्करस्रजौ' इति सप्तभिर्मंत्रैः प्रतिमंत्रं मुखं विमार्ष्टि। ततः शिष्टाचारा 'दंगानि च म आप्यायतामि' त्यनेन शिरः प्रभृतिपादांतं सर्वांगानि स्पृशेत्। 'वाक् च म आप्यायतामिति' मुखं। 'प्राणश्च म आप्यायतामिति' नासारंध्रे युगपत्। 'चक्षुश्च म आप्यायतामिति' चक्षुषी युगपत्। 'श्रोत्रं च म आप्यायतामिति' दक्षिणं श्रोत्रं। ततोऽनेनैव वामं। 'यशो बलं च म आप्यायतामिति मंत्रं पठित्वा युगपद्बाहू स्पृशेत्। 'अय तन्नो अस्तु ष्यायुषमि'ति हृदि स्पृशेत्। ततो'ऽमुकगोत्रोऽमुक प्रवरोऽमुकशर्माहं भो अमुकशर्मन् त्वामभिवादये' इत्युक्त्वा गुर्वादिकमभिवादयेत्। ततो गुर्वादि 'आयुष्मान्भवामुकशर्मन् भो' इति प्रत्यभिवादयेत्। ततो 'भवति भिक्षां देहीति' ब्राह्मणो भिक्षेत् 'भिक्षां भवति देहीति' राजन्यः। 'भिक्षां देहि भवतीति' वैश्यः। एवं भिक्षित्वा भैक्षं गुरु निवेद्याहःशेषं वाग्यतस्तिष्ठेदासीत वेति नियमः। तत उपास्तमयं संध्यामुपास्य पूर्ववदग्निकार्यं कृत्वा वाचं विसृजेदिति उपनयनं॥

अथ समावर्त्तनं। तत्राचार्यो मातृपूजाभ्युदयिके कृत्वा बटुना 'भो आचार्याहं स्नास्ये' इत्युक्तः 'स्नाहि' इत्युक्त्वा पंचभूसंस्कारान्कृत्वा लौकिकाग्निं संस्थाप्य ब्रह्मोपवेशनाद्याज्यभागांतं कृत्वा ऋग्वेदमधीत्य स्नाति तदा 'पृथिव्यै स्वाहाऽग्नये स्वाहेति' द्वे आज्याहुतीर्जुहुयात्। यदि यजुर्वेदं तदा 'ऽन्तरिक्षाय स्वाहा। वायवे स्वाहेति' द्वे। यदि सामवेदं तदा 'दिवे स्वाहा। सूर्याय स्वाहेति' द्वे। यद्यथर्ववेदं तदा 'दिग्भ्यः स्वाहा। चंद्रमसे स्वाहेति' द्वे। यद्येकदा वेदचतुष्टयं त्रयं द्वयं वा तदा तद्वेदाहुतीर्हुत्वा 'ब्रह्मणे' 'छंदोभ्य' इति वा द्वे हुत्वा 'प्रजापतय' इत्याद्याः सप्त तंत्रेण जुहुयात्। ततो 'ब्रह्मणे छंदोभ्य' इत्याद्या नवाहुतीर्हुत्वा महाव्याहृत्यादिस्विष्टकृदंता दशाहुतीर्हुत्वा संस्रवान्प्राश्य पूर्णपात्रं वरयोरन्यतरं ब्रह्मणे दक्षिणां दद्यात्। ततो ब्रह्मसंमेहणपूर्वकं गुरुं नमस्कृत्य परिसमूहनादिव्यायुष्करणांतं तस्मिन्नग्नौ समिदाधानं कुर्यात्। ततोऽग्नेरुत्तरतोऽष्टौ

१ फद्य-पूर्वदक्षिण। २ ह्रग-परिसमिन्धन। ३ फ-प्रताप्य। ४ फ-च क्षुरी। ५ फ-ब्रह्मचार्युपसंग्रहण पूर्वकं।

कलशान् दक्षिणोत्तरायतान्संस्थाप्य तत्पूर्वभागे प्रागग्रकुशेषूदङ्मुखः स्थित्वा ‘ येऽप्स्वंतरग्नयः प्रविष्टा गोह्योपगोह्यो मयूखो मनोहास्खलोऽविरुजस्तनूदूषुरिंद्रियहतान्विजहामि यो रोचनस्तमिह गृण्हामीति ’ मंत्रेणाद्यकुंभादुदकमादाय ‘ तेन मामभिषिंचामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसायेति ’ मंत्रेणात्मानमभिषिच्यैवमन्येभ्यः प्रत्येकं समंत्रकं जलमादाय ‘ येन श्रियमकृणुतां येनाव- मृशतां सुरां । येनाक्षावभ्यषिंचतां यद्वा तदश्विना यश ’ इति । ‘ आपो हि ष्ठामयो भुवः । यो वः शिवतमो रसः । तस्मा अरं गमाम वः ’ । इत्येतैश्चतुर्भिर्मंत्रैः प्रतिमंत्रमात्मानमभिषिच्यं त्रिस्तूष्णीमभिषिंचेत् । तत ‘ उदुत्तममिति ’ मंत्रेण मेखलां शिरोमार्गेण निःसार्य्य भूमौ निधायान्यद्वासः परिधायाचम्य ‘ उद्यन् भ्राजन् भृष्णुरिंद्रो मरुद्भिरस्थात्प्रातर्यावभि- रस्थाद्दशसनिरसि दशसनिं मा कुर्वाविदन्मागमये ’त्यनेनादित्यमुपस्थाय दधि वा तिलान्वा दक्षिणहस्तमध्यगतसोमतीर्थेन प्राश्य जटालोमनखानि वापयित्वा स्नात्वाऽऽचम्योक्त- लक्षणेनौदुंबरकाष्ठेन ‘ अन्नाद्यायव्यूहध्व॰ सोमो राजाय मागमत् स मे मुखं प्रमार्क्ष्यद्यशसा च भगेन चे’ त्यनेन मंत्रेण दंतान् क्षालयित्वाऽऽचम्य सुगंधिद्रव्यमिश्रितेन यवादिचूर्णेन तैलसमेतेन शरीरमुद्वर्त्य पुनः सशिरस्कं स्नात्वाऽऽचम्य चंदनाद्यनुलेपनं पाणिभ्यां गृहीत्वा मुखं नासिकां च ‘ प्राणापानौ मे तर्पय चक्षुर्मे तर्पय श्रोत्रं मे तर्पये ’त्यनेन मंत्रेणालभ्य पाणौ प्रक्षाल्य तदुदकमंजलिनाऽऽदायापसव्यं कृत्वा दक्षिणमुखो भूत्वा ‘पितरः शुंधध्वमि’त्यनेन मंत्रेण पितृतीर्थेन निषिच्य यज्ञोपवीती भूत्वोदकमुपस्पृश्य चंदनादिना ‘ सुचक्षा अहमक्षिभ्यां भूयासं सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां भूयासमि’ति मंत्रेणात्मानमनुलिप्य ‘ परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि । शतं च जीवामि शरदः पुरूची रायस्पोषमभिसं व्ययिष्य ’ इति मंत्रेणाहतं धौतं वासः परिधाय पूर्वधृतमुपवीतमुत्तार्य जले प्रक्षिप्य पदं नवमुक्तलक्षणामुपवीतं ‘यशो- पवीतमि ’त्यादिना मंत्रेण परिधाय ‘ यशसा मा द्यावापृथिवी यशसेंद्राबृहस्पती । यशो भगश्च माविंदद्यशो मां प्रतिपद्यतामिति ’ । एकं चेत्पूर्वस्योत्तरवर्गेण प्रच्छादयाति । सुमनसः प्रतिगृह्णाति । ‘ या आहरज्जमदग्निः श्रद्धायै मेधायै कामायेन्द्रियाय । ता अहं प्रतिगृह्णामि यशसा च भगेन चेति ’ पुष्पाण्यतः प्रतिगृह्य ‘ ययशोऽप्सरसामिंद्रश्चकार विपुलं पृथु । तेन संग्रथिताः सुमन आबध्नामि यशोमयीति ’ मंत्रेण शिरसि बध्वा ‘ युवा सुवासा ’ इत्यनयर्चोष्णीषेण शिरो वेष्टयित्वा‘ऽलंकरणमसि भूयोऽलंकरणं भूयादिति’मंत्रेण दक्षिणकर्णे कुंडलं कृत्वा तेनैव वामकर्णे धृत्वा ‘ वृत्रास्यासि कनीनकश्च स्वं विलोक्य ’ ‘ बृहस्पते छर्दिरसि पाप्मानो मामंतर्द्धेहि . तेजसो यशसो मामंतर्द्धेही ’ त्यन्यस्माच्छत्रं प्रतिगृह्य ‘ प्रतिष्ठे स्थो विश्वतो मा पातमि ’ त्युपानहौ युगपत्पादयोः प्रतिमुच्य ‘ विश्वाभ्यो मा नाष्ट्राभ्यस्परिपाहि सर्वत ’ इति वैणवं दंडमादध्यात् । अथाचार्यः स्नातकस्य यमान् त्रिरात्रव्रतानि च श्रावयेत् । स च तानि यथोक्तानि कुर्यात् ।

इति समावर्तनं ॥

---

१ गफ–गोह्य उपगोह्यो । २ ग–मयूखो । ३ फ–तन्न सुरिंद्रिय । ४ फह–षिच्य । ५ फ–सानं; ग–वर्गेणेतन्मंत्रेणैवोत्तरीयं कृत्वा । या आहरजमदग्निः । ८ ग–म्छ । ९ ह–यातम् । १० ह–विधेभ्यो । ६ ग–विन्दद्यशो । ७ फ–मिति मंत्रेणोत्तरीयं वास आच्छाद्य द्वितीय ( म ? ) वस्त्रालाभे पूर्वस्यैवोत्तर-सर्गे ।

अथ विवाहः। तत्र पुण्येऽहनि वरपिता मातृपूजाम्युदयिके कृत्वा सुतं कन्यापितृगृहमानयेत्। ततः कन्यापिता मातृपूजाभ्युदयिके कृत्वा गृहागतं वरं मधुपर्केणार्चयेत् तद्यथा। अर्चकः पश्चादासनस्थ तिष्ठंतमर्च्य प्रति 'साधु भवानास्तामर्चयिष्यामो भवन्तमि'त्युक्त्वा विष्टरं पाद्यमर्घमाचमनीयं मधुपर्कं चार्घमाचमनीयं मधुपर्कं चार्घ्यातिकमानीय 'विष्टरो विष्टरो विष्टर' इत्यन्येन श्राविते 'प्रतिगृह्यतामि'त्यर्च्यहस्ते विष्टरं दद्यात्। अथार्च्यो 'वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः। इमं तमभितिष्ठामि यो मा कश्चाभिदासती'त्यनेन मंत्रेणासनाधो विष्टरं कृत्वा तत्रोपविशेत्। ततोऽर्चकः 'पाद्यं पाद्यं पाद्यमि'त्यनेन श्राविते 'प्रतिगृह्यतामिति' पाद्यार्थोदकमर्च्याय समर्पयेत्। ततोऽर्च्यस्तत्पात्रं भूमौ निधायांजलिना जलमादाय 'विराजो दोहोऽसि विराजो दोहमशीय मयि पाद्यायै विराजो दोह' इति मंत्रेण दक्षिणं पादं प्रक्षाल्य तेनैव मंत्रेण वामं प्रक्षालयेत्। ब्राह्मणः क्षत्रियवैश्यौ तु पूर्वं सव्यं ततो दक्षिणमिति विशेषः। ततोऽर्चकेन पुनः पूर्ववद्दत्तं विष्टरमर्च्यो 'वर्ष्मोऽसी'त्यादि मंत्रेण पादयोरधस्तान्निदध्यात्। ततोऽर्चको 'अर्घोऽर्घोऽर्घ' इत्यनेन श्राविते 'प्रतिगृह्यतामि'त्युक्त्वा 'आपः स्थ युष्माभिः सर्वान् कामानवाप्नवानीति' मंत्रमुक्तवतेऽर्च्यायार्घं प्रयच्छेत्। ततोऽर्च्योऽर्घं प्रतिगृह्य मूर्धपर्यंतमानीय "समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत। अरिष्टा अस्माकं वीरा मापरासेचि मत्पय" इत्यनेन मंत्रेण निनयन्नभिमंत्रयेत्। ततोऽर्चक 'आचमनीयमाचमनीयमाचमनीय मित्यन्येन' श्राविते 'प्रतिगृह्यतामि'त्युक्त्वाऽर्च्यहस्ते आचमनीयं प्रयच्छेत्। अथार्च्यः प्रतिगृह्य 'आमागन्यशसा संसृज वर्चसा। तं मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनामिति' मंत्रेण सकृदाचम्य स्मार्तमाचमनं कुर्यात्। ततोऽर्चको 'मधुपर्को मधुपर्को मधुपर्क' इत्यन्येनोक्तो 'प्रतिगृह्यतामिति' ब्रूयात्। ततोऽर्च्योऽर्चकहस्तास्थितमुद्घाटितं मधुपर्कं 'मित्रस्य त्वा चक्षुषा प्रतीक्ष' इति मंत्रेणावेक्ष्य 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीति' मंत्रेण* सकृदालोड्य तूष्णीं सकृदनामिकांगुष्ठाभ्यामादाय बहिर्निक्षिप्य पुनर्द्विरालोड्य निरीक्ष्य 'यन्मधुनो मधव्यं परमं रूपमन्नाद्यं। तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानीति' मंत्रेणानामिकांगुष्ठाभ्यामादाय त्रिः प्राश्नीयात्। 'मधु वाता ऋतायत' इत्यादिभिस्त्रिभिर्ऋग्भिः प्रत्यृचं त्रिः प्राश्नीयाद्वा शेषं शिष्यादिभ्यो दद्यात्सर्वं वा भक्षयेत्। प्राकूदिश्यसंचरे वा प्रक्षिपेत्। अथाचम्य 'वाङ्म आस्येऽस्त्विति' करामेण मुखं स्पृशेत्। 'नसोर्मे प्राणोऽस्त्विति' दक्षिणवामनासाग्रं। 'अक्ष्णोर्मे चक्षुरिति' दक्षिणोत्तरे चक्षुषी। 'कर्णयोर्मे श्रोत्रमस्त्विति' मन्त्रावृत्त्या दक्षिणोत्तरौ कर्णौ स्पृशेत्। एवं 'बाह्वोर्मे बलमस्त्विति' दक्षिणोत्तरौ बाहू। 'ऊर्वोर्मे ओजोऽस्त्विति' युगपदूरू। 'अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह संत्विति' शिरःप्रभृति पादांतं सर्वांगमुभाभ्यां हस्ताभ्यां स्पृशेत्। तत खड्गहस्तोऽर्चकः 'गौर्गौर्गौरालभ्यतामिति' ब्रूयात्। अथार्च्यो 'माता रुद्राणामि'त्यादि 'पाप्मा हतः ओमि'त्युपांशूक्त्वो'त्सृजत तृणान्यत्तु' इत्युच्चैः प्रतिब्रूयात्। ततो वर

१ फङ–कन्या। २ ङ–तत्राचार्यातिक्मानीय, ग–तत्राच्यान्तिकमानीय। ३ ग–इदं। *फ–"अञ्जलिना प्रतिगृह्य सव्यपाणौ कृत्वा दक्षिणस्यानामिकया" 'नम श्यावास्यायान्नशने यत्त आविद्धं तत्ते निष्कृन्तामीति मन्त्रेण" पाठः।

ऐशान्यां दिशि चतुर्हस्तायां वेदिकायां लौकिकं निर्मथ्य वाऽग्निं स्थापयित्वा पश्चादग्नेस्तृणतूलकं[1] कटं वा स्थापयेत् । ततः कन्यापिता वस्त्रचतुष्टयं वराय प्रयच्छेत् । वरश्च तेषु मध्ये ‘ जरां गच्छ परिधत्स्व वासो भवाकृष्टीनामभिशस्तिपा वा । शतं च जीवामि शरदः सुवर्चा रयिं च पुत्राननु-संव्ययस्वायुष्मतीदं परिधस्व वास ’ इति मंत्रेणैकं[2] ‘ या अकृतन्नवयं या अतन्वत । याश्च देवीस्तन्तूनभितो ततन्थ । तासस्त्वा देवीर्जरसे संव्ययस्वायुष्मतीदं परिधत्स्व वासः ’ इत्य-परमिति वासोयुगं कुमारीं परिधाप्य ‘ परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मिशतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्य ’ इत्यनेनैकं ‘ यशसा मा द्यावापृथिवी यशसेंद्राबृहस्पती यशो भगश्च माविदद्यशो मा प्रतिपद्यतामि’त्यपरमिति वासोयुगं परि-दध्यात्। अथ वधूपिता ‘ परस्परं समंजेथामिति ’ संप्रेष्य वधूवरो समंजयति । ततो वरः ‘समंजतु विश्वेदेवाः समापो हृदयानि नौ । संमातरिश्वा संधाता समुदेष्टी दधातु नौ ’इति पठेत् । अथ कन्यापितोदङ्मुखः कुशजलाक्षतपाणिः ‘ अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्रायामुक-शर्मणः पौत्रायामुकशर्मणः पुत्रायेति ’ वरपक्षे ‘ अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्रीममुकशर्मणः पौत्रीममुकशर्मणः पुत्रीमिति ’ कन्यापक्षे एवं पुनर्वारद्वयमुक्त्वा ‘प्राङ्मुखोप-विष्टायामुकगोत्रायामुकप्रवरायामुकशर्मणे प्रत्यङ्मुखोपविष्टाममुकगोत्राममुकप्रवराममुकनाम्नी-मिमां कन्यां सालंकारां प्रजापतिदैवत्यां पुराणोक्तशतगुणीकृतज्योतिष्टोमातिरात्रसमफलप्राप्ति-कामो भार्यात्वेन तुभ्यमहं संप्रदद ’ इत्युक्त्वा सकुशाक्षतजलं कन्याहस्ते वा वरदक्षिण-हस्ते दद्यात्। वरश्च ‘द्यौस्त्वा ददतु पृथिवी त्वा प्रतिगृह्णात्विति’ मंत्रेण तां प्रतिगृह्य ‘कोऽदादि’-त्यादिकामस्तुतिं पठेत् । अथ कन्यापिता कन्यादानप्रतिष्ठासिद्ध्यर्थं सुवर्णं गोमिथुनं च दक्षिणां दत्वा यौतकत्वेन गोमहिष्यश्च ग्रामादि यथासंभवं दद्यात् । ततो वरो ‘ यदैषि मनसा दूरं दिशोऽनु पवमानो वा । हिरण्यपर्णो वैकर्णः स त्वा मन्मनसा करोत्वमुकि ’ इत्यनेन मंत्रेण प्रतिगृहस्थानाद्वधूं गृहीत्वा निष्क्रम्याग्निसमीपमागच्छेत् । अत्रावसरे कश्चिज्जलपूर्णं कुंभं स्कंधे निधायाग्नेर्दक्षिणत उत्तरतो वाऽभिषेकपर्यंतं वाग्यत ऊर्ध्वं तिष्ठेत् । ततो वधूपित्रा ‘परस्परं समीक्षेथामिति ’ प्रेषितो वरः समीक्षमाणां समीक्षमाण ‘ अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः । वीरसूर्देवकामास्योना शन्नो भव द्विपदे शं चतुष्पदे । सोमः प्रथमो विविदे गंधर्वो विविद उत्तरः । तृतीयोऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजः । सोमोऽददद्गंधर्वाय गंधर्वोऽददद्ग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमां । सा नः पूषा शिवतमा मैरय सा न उरू उशती विहर । यस्यामुशंतः प्रहराम शेपं यस्यामु कामा बहवो निविष्ट्यै ’ इति पठित्वा प्रदक्षिणमग्निं परीत्य पश्चादग्नेः पूर्वस्थापिततेजनीकटयोरन्यतरस्मिन्दक्षिणपादमग्रे[5] कृत्वोपविशेत् । स्वदक्षिणतो वधू चोपवेश्य ब्रह्मोपवेशनादि चरुवर्जं पर्युक्षणांतं कर्म कुर्यात् । इयांस्तु विशेषः । शमीपलाशमिश्रा लाजा अश्मा अश्वं[6] लोहितमानडुहं चर्म वधूभ्राता शूर्पं दृढपुरुष आचार्याय वरद्रव्यमित्येतावति वस्तून्युपकल्पयेत् । न प्रोक्षेत्[7] । ततः स्रुवमादाय दक्षिणं जान्वाच्य ब्राह्मणान्वारब्धः ‘ प्रजापतये स्वाहा ’ इदं प्रजापतये । ‘ इंद्राय स्वाहा ’ इदमिंद्रायेत्याघारौ । ‘ अग्नये

१ ख-तूलकं फ-फलके। २ फ-एकैक। ३ फ-तनूमनगितो तत.। यथा(रा—। ४ फ-ध्योर्धे।
५ फ-मु शेर। ६ फ-अरुड। ७ फ-प्रोक्षयेत्।

स्वाहा ' इदमग्नये ' सोमाय स्वाहा ' इद सोमाय । इत्याज्यभागौ । ' ॐ भूः स्वाहा ' इदमग्नये । ' ॐ भुवः स्वाहा ' इदं वायवे । ' ॐ स्वः स्वाहा ' इदं सूर्याय[1] । ' त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडो अवया सिसीष्ठाः । यजिष्ठो वन्हितमः शोशुचानो विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत्स्वाहा ' इदमग्नीवरुणाभ्यां । ' स त्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ । अवयक्ष्व नो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो न एधि स्वाहा ' इदमग्नीवरुणाभ्यां । ' अयाश्चाग्ने स्यनभिशस्तिपाश्च सत्यमित्त्वमया असि । अयो नो यज्ञं वहास्ययानो धेहि भेषजꣳस्वाहा ' इदमग्नयऽअयसे । ' ये ते शतं वरुणाय ये सहस्रं यज्ञियाः पाशा वितता महांतः । तेभिर्नो अद्य सवितोत विष्णुर्विश्वो मुचंतु मरुतः स्वर्का स्वाहा* ' इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुभ्यः स्वर्केभ्यः । ' उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमं श्रथाय । अथावयमादित्य व्रते तवानागसो अदितये स्याम स्वाहा ' इदं वरुणाय । ब्रह्मणान्वारब्धो हुत्वा ततो राष्ट्रभृतो यथा—' ऋताषाडृतधामाऽग्निर्गंधर्वः स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा वाट् ' इदमृतासाहे ऋतधाम्नेऽग्नये गंधर्वाय । ' ऋताषाडृतधामाग्निर्गंधर्वस्तस्यौषधयोऽप्सरसो मुदो नाम ताभ्यः स्वाहा ' इदमोषधिभ्योऽप्सरोभ्यो मुभ्यः । 'सꣳहितो विश्वसामा सूर्यो गंधर्वः स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा वाट् ' इदं सꣳहिताय विश्वसाम्ने सूर्याय गंधर्वाय । ' सꣳहितो विश्वसामा सूर्योगंधर्वस्तस्य मरीचयोऽप्सरस आयुवो नाम ताभ्यः स्वाहा वाट् ' इदं सुषुम्णे सूर्यरश्मये चंद्रमसे गंधर्वाय । ' सुषुम्णः सूर्यरश्मिश्चंद्रमा गंधर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम ताभ्यः स्वाहा ' इद नक्षत्रेभ्योऽप्सरोभ्यो भेकुरिभ्यः । ' इषिरो विश्वव्यचा वातो गंधर्वः स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा वाट् ' इदमिषिराय विश्वव्यचसे वाताय गंधर्वाय । ' इषिरो विश्वव्यचा वातोगंधर्वस्तस्यापो अप्सरस ऊर्जो नाम ताभ्यः स्वाहा ' इदमभ्योऽप्सरोभ्य ऊर्ग्भ्यः । ' भुज्युः सुपर्णो यज्ञो गंधर्वः स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा वाट् ' इदं भुज्यवे सुपर्णाय यज्ञाय गंधर्वाय । ' भुज्युः सुपर्णो यज्ञोगंधर्वस्तस्य दक्षिणा अप्सरसस्तावानाम ताभ्य· स्वाहा ' इदं दक्षिणाभ्योप्सरोभ्यस्तावा नाम ताभ्यः ।[2] 'प्रजापतिर्विश्वकर्मा मनोगंधर्वः स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा वाट् ' इदं प्रजापतये विश्वकर्मणे मनसे गंधर्वाय । ' प्रजापतिर्विश्वकर्मा मनोगंधर्वस्तस्य ऋक्सामान्यप्सरस एष्टयो नाम ताभ्यः स्वाहा' इदमृक्सामभ्योऽप्सरोभ्य एष्टिभ्यः ।

अथ जया होमः । ' चित्तं च स्वाहा ' इदं चित्ताय । ' चितिश्च स्वाहा ' इदं चित्यै । ' आकूतं च स्वाहा ' इदमाकूताय । ' आकूतिश्च स्वाहा ' इदमाकूत्यै । ' विज्ञातं च स्वाहा ' इदं विज्ञाताय । ' विज्ञातिश्च स्वाहा ' इदं विज्ञात्यै । ' मनश्च स्वाहा ' इदं मनसे । ' शक्वरीश्च स्वाहा ' इद शक्वरीभ्यः । ' दर्शश्च स्वाहा ' इदं दर्शाय । ' पूर्णमासं च स्वाहा ' इदं पूर्णमासाय । 'बृहच्च स्वाहा ' इदं बृहते । ' रथंतरं च स्वाहा ' इदं रथंतराय । 'प्रजापतिर्जयानिंद्राय वृष्णे प्रायच्छदुग्र· पृतनाजयेषु । तस्मै विशः समनमंत सर्वाः स उग्रः स इहव्यो बभूव स्वाहा' इदं प्रजापतये जयानिंद्राय ।

अथाभ्यातानः । ' अग्निर्भूतानामधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्याꣳ स्वाहा ' इदमग्नये भूतानामधिपतये ' एवं ' समामवत्विन्स्वेव'मादिस्वाहाकारांतरस्योत्तरत्राप्यनुषंगः । इन्द्रो ज्येष्ठानामधिपतिः ।

1 फ-स्मणो । * फ-पाठः । २ फ-भुज्यदक्षिण्ये । ३ ग-तावम्याः फज्ञ-धि ।

इदमिंद्राय ज्येष्ठानामधिपतये । ' यमः पृथिव्या अधिपतिः ' इदं यमाय पृथिव्या अधिपतये ।
' वायुरंतरिक्षस्याधिपतिः ' इदं वायवेऽतरिक्षस्याधिपतये । ' सूर्यो दिवोऽधिपतिः ' इदं सूर्याय दिवो-
ऽधिपतये । ' चंद्रमा नक्षत्राणामधिपतिः ' इदं चंद्रमसे नक्षत्राणामधिपतये । ' बृहस्पतिर्ब्रह्मणोऽधि-
पतिः ' इदं बृहस्पतये ब्रह्मणोऽधिपतये । ' मित्रः सत्यानामधिपतिः ' इदं मित्राय सत्यानामधि-
पतये । ' वरुणोऽपामधिपतिः ' इदं वरुणायाऽपामधिपतये । ' समुद्रः स्रोत्यानामधिपतिः ' इदं
समुद्राय स्रोत्यानामधिपतये । ' अन्नꣳ साम्राज्यानामधिपतिः समावत्वास्मिन्ब्रह्मण्यस्मिन्० '
इदमन्नाय साम्राज्यानामधिपतये । ' सोम ओषधीनामधिपतिः ' इदं सोमायौषधीनामधिपतये ।
' सविता प्रसवानामधिपतिः ' इदं सवित्रे प्रसवानामधिपतये । ' रुद्रः पशूनामधिपतिः '
इदं रुद्राय पशूनामधिपतये । उदकोपस्पर्शनं । ' त्वष्टा रुद्राणामधिपतिः ' इदं त्वष्ट्रे रुद्राणा-
मधिपतये । ' विष्णुः पर्वतानामधिपतिः ' इदं विष्णवे पर्वतानामधिपतये । ' मरुतो गणाना-
मधिपतिः समावत्वास्मिन् ' इदं मरुद्भ्यो गणानामधिपतिभ्यः । ' पितरः पितामहाः परेऽवरे
ततास्ततामहा इह माऽवंत्वस्मिन् स्वाहा ' इदं पितृभ्यः पितामहेभ्यः परेभ्यो वरेभ्यस्ततेभ्यस्तताम-
हेभ्यः । उदकस्पर्शनं । ' अग्निरैतु प्रथमो देवतानाꣳ सोऽस्यै प्रजां मुंचतु मृत्युपाशात् । तदयं राजा
वरुणोऽनुमन्यतां यथेयꣳ स्त्री पौत्रमघं न रोदात्स्वाहा ' इदमग्नये । ' इमामग्निस्त्रायतां गार्हपत्यः
प्रजामस्यै नयतु दीर्घमायुः । अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुद्ध्यतामियं
स्वाहा ' इदमग्नये । ' स्वस्ति नो अग्ने दिव आपृथिव्या विश्वानि धेह्ययथा यजत्र । यदस्यां महि
दिवि जातं प्रशस्तं तदस्मासु द्रविणं धेहि चित्रꣳ स्वाहा ' इदमग्नये । ' सुगन्नु पंथां
प्रदिशन्न एहि ज्योतिष्मध्येह्यजरन्न आयुः । अपैतु मृत्युरमृतं न आगाद्वैवस्वतो नो अभयं
कृणोतु स्वाहा ' इदं वैवस्वताय । ' परं मृत्यो अनुपरेहि पंथां यस्ते अन्य इतरो
देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान्स्वाहा '
इदं मृत्यवे । उदकोपस्पर्शनं । ततो वधूभ्राता पूर्वोपकल्पितान् शमीपलाशमिश्रान्
लाजान् शूर्पे धृतानंजलिनाऽऽदाय वध्वंजलावावपेत् । ततः प्राङ्मुखी वधूस्तिष्ठंती
' अर्यमणं देवं कन्या अग्निमयक्षत । स नो अर्यमा देवः प्रेतो मुंचतु मापतेः स्वाहे '
त्यनेन मंत्रेणांजलिस्थान् लाजान् तृतीयांशं हुत्वा । ' इदमर्यम्णे ' इत्युक्त्वा ' इयं नार्युपब्रूते
लाजानावपंतिका आयुष्मानस्तु मे पतिरेधंतां ज्ञातयो मम स्वाहे ' त्यनेनांजलिस्थलाजार्द्धं
हुत्वा ' इदमग्नये ' इत्युक्त्वा ' इमान् लाजानावपाम्यग्नौ समृद्धिकरणं तव । मम तुभ्यं च
संवदनं तदग्निरनुमन्यतामियं स्वाहे ' त्यनेन सर्वान् लाजान् हुत्वा ' इदमग्नये ' इति ब्रूयात् ।
ततो वरो ' गृह्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथा सः । भगो अर्यमा सविता
पुरंधिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः । अमोऽहमस्मि सा त्वं सा त्वमस्यमो अहं । सा माह-
मस्मि ऋक्त्वं द्यौरहं पृथिवी त्वं । तावेहि विवहावहै सह रेतो दधावहै प्रजां प्रजनयावहै पुत्रा-
न्विन्दावहै बहून् ते संतु जरदष्टयः । संप्रियौ रोचिष्णू सुमनस्यमानौ । पश्येम शरदः शतं
जीवेम शरदः शतं शृणुयाम शरदः शतमि ' त्यनेन मंत्रेण वध्वाः सांगुष्ठं दक्षिणकरं गृहीत्वा ।
ततो वध्वा दक्षिणं पादं धृत्वा ' आरोहेममश्मानमश्मेव त्वं स्थिरा भव । अभितिष्ठ पृतन्य-
तोऽवबाधस्व पृतनायतः ' इति मंत्रेणाग्नेरुत्तरस्थिताश्मोपरि संस्थाप्य । ' सरस्वति प्रेदमव सुभगे

१ ख–ता ग–न्वतु; ख–यतु । २ फ–यथापदस्या । ३ ग–मान । ४ फ–वापने ।
५ ख–ता । ८ ख–तावेव ।
६ ग–त्वा । ७ ख–त्वा ।

वाजिनीवति । या त्वो विश्वस्य भूतस्य प्रजयामस्याग्रत । यस्या भूत समभवद्यस्यां विश्वमिद जगत् । तामद्य गाथा गास्यामि या स्त्रीणामुत्तम यश ' इति प्रणीय ' तुभ्यमग्रे पर्यवहन्त्सूर्यं वहतु नासह । पुन पतिभ्यो जाया दोग्ने प्रजया सहे'ति मन्त्र पठित्वा वध्वा सहाग्निं परिक्रम्यैव पुनर्द्विवार लाजावपनादि परिक्रमणात कुर्यात् । ततो वधूभ्राता शूर्पकोणप्रदेशेन सर्वान लाजान् वध्वञ्जलावावपेत् । अथोत्थाय वध्वा ' भगाय स्वाहे'त्यनन हुत्वेद् भगायेति त्यागे कृते वरस्तया सहाचारात्तूष्णीं चतुर्थ परिक्रमण कृत्वा ब्रह्मणान्वारब्ध ' प्रजापतये स्वाहेति ' हु त्वेद् प्रजापतये इति त्यागं कुर्यात् । ततोवधूर्वरेण ' एकमिषे विष्णुस्त्वानयत्वि'त्युक्ते एक पदमुदग्ग दद्यात् । 'द्वे ऊर्जे विष्णुस्त्वानयत्वि' त्युक्ते द्वितीय । 'त्रीणि रायस्पोषाय विष्णुस्त्वानये'त्वि-त्युक्ते तृतीय । ' चत्वारि मायोभवाय विऽष्णुस्त्वानयत्वि 'त्युक्ते चतुर्थ । ' पच पशुभ्यो विष्णु स्त्वानयत्वि' त्युक्ते पचम । 'षट् ऋतुभ्यो विष्णुस्त्वानयत्वि'त्युक्ते षष्ठ । 'सखे सप्तपदा भव सा मामनु व्रता भव विष्णुस्त्वानयत्वि'त्युक्ते सप्तम पद दद्यात् । अथ वर पूर्वमभिषेकार्थं धृतकुम्भादुदक मादाय ' आप शिवा शिवतमा शान्ता शान्ततमास्त कृण्वन्तु भेषजमि 'त्यनन मन्त्रण वधूमूर्द्ध न्यभिषिच्य पुनरुदकमादाय 'आपो हि ष्ठेति' तृच पठित्वाऽभिषिच्य ' सूर्यमुदीक्षस्वेति ' वधू सप्रेष्य 'तच्चक्षुरि'त्यादि 'शृणुयाम शरद शतमित्यत' मन्त्र पठित्वा सूर्यमुदीक्षते । तस्या दक्षिणांसस्यो परि हस्त नीत्वा ' मम व्रते ते हृदय दधामि मम चित्तमनुचित्त ते अस्तु । मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यमिति ' मन्त्रेण तद्धृदयमालभ्य ' सुमङ्गलीरिय वधूरिमा समेत्य पश्यत । सौभाग्यमस्यै दत्त्वा याथास्त विपरेतन 'त्यनेन तामभिमन्त्र्याचारात्तद्वामभागे उपविश्य तस्या सीमन्ते वर सिंदूर दद्यात् । अथाग्ने प्रागुदग्वा पूर्वकल्पिते उत्तरलोम्नि प्राग्ग्रीवे आनडुहे चर्मणि ' इह गावो निषीदन्त्विहाश्वा इह पूरुषा । इहो सहस्रदक्षिणो यज्ञ इह पूषा निषीदतु'। इति मन्त्रेण वधू दृढपुरुषो वरध्रीत्याप्योपवेशयेत् । ततो वर पूर्ववद्यथास्थानमुपविश्य ब्रह्मा वारब्धे अग्नये स्विष्टकृते स्वाहा ' ' इदमग्नये स्विष्टकृते ' । इति स्विष्टकृद्धोम कृत्वा ससवा-न्म इय ब्रह्मणे पूर्णपात्र वरयोरन्यतर दक्षिणात्वेन दत्त्वा स्वाचार्याय वर दत्त्वा भूयसीं सकल्प्याऽ दित्यऽस्तमिते ' ध्रुवमीक्षस्वेति ' वधू प्रेष्य ' ध्रुवमसि ध्रुव त्वां पश्यामि । ध्रुवैधिपोष्ये मयि मह्य त्वादाद्बृहस्पति । मया प या प्रजावती सजीव शरद शतमिति' मन्त्रं वाचयित्वा ध्रुवमीक्षयीत ततो दम्पती विवाहादारभ्य त्रिरात्रमक्षारालवणाशिनावध शायिनौ सव सर द्वादशरात्रं षट्रात्र त्रिरात्रं वा ब्रह्मचारिणौ स्यातामिति । इति विवाहप्रयोग ॥

चर्मण्वतीतरणिजाशुभसगमस्य
साम्निध्यभाजि कृतशालिनि मध्यदेशे ॥
ख्याता भरेहरनगरी किल तत्र राजा
राजीवलोचनरतो भगवतदेव ॥ १ ॥

इतिश्रीसेंगरवशावतसश्रीमहाराजाधिराजश्रीभगवतदेवादिष्टमीमांसकभट्टशकरात्मज-
भट्टनीलकठकृते भगवतभास्करे संस्कारमयूख समाप्त ॥ ॥

१ छ-त्वां । २ छ-दास्याम । ३ छ-उदक । ४ फ-मायोद्भवाय । ५ छ दी । ६ फ-ममा । ७ फ विान्त्रु । ८ ग-वि्च्य । ९ प-सूर्य न्दीक्षन । १० छ-दृर्य । ११ फछ वेय । १२ छ-स्वा । १३ छ सहस्र दक्षिणा । १४ ग-न्तु ह-नि । १५ फ-वरोत्याप्य छ-वरा वोथाप्य ।

